सृज्येतेति त्रिमलबद्धत्वात् । तदुक्तं प्राक्

**'धोपुंविवेके विज्ञाते प्रधानपुरुषान्तरे ।**
**अपि न क्षीणकर्मा स्यात्कलायां तद्धि संभवेत् ॥**
**अतः सांख्यदृशा सिद्धः प्रधानाधो न संसरेत् ।** ( ९।१८७ ) इति ॥

ननु भवतु नामैतत्, मायापुंविवेकज्ञस्य तु ज्ञानाकलतैव किं भवेदुदतोऽपि विशेष इत्याशङ्क्याह

**विज्ञानाकलतां प्राप्तः केवलादधिकारतः ॥ २७५ ॥**
**मलान्मन्त्रतदीशादिभावमेति सदा शिवात् ।**

---

प्रकृतिपुरुषज्ञान से भी क्या लाभ ? यदि वह साधक भी सामान्य जन के समान बद्ध ही रह जाता है ? इस पर कह रहे हैं कि—

वह पुरुष प्रकृति-पुरुष विज्ञानावेत्ता बन जाने के बाद प्रकृति के स्तर से निम्न सृष्टि के स्तर पर कभी नहीं आता है। जो पुरुष माया से निम्न स्तर के साधनों में लगा होता है, वह अनन्तेश द्वारा प्रेरित संस्सृति चक्र की गतागतिक पद्धति की पाशबद्धता को प्राप्त कर पशुता का पात्र बन जाता है ।

बुध्न अप्रचलित पारिभाषिक पद है । इसका अर्थ वह स्थान है, जो सबसे निचला भाग होता है। प्रकृति के नीचे का भाग ही माया का भाग है। वह प्रकृति के नीचे तथा माया से ऊपर का स्तर है। माया के ऊपर रहने वाले में एक 'मल' रहता है, जबकि माया के नीचे वाले में तीन मल शेष रहते हैं।

श्रीत० ९।१८६--१८७ द्वितीय भाग पृ० ४८९-४९० में इस विषय का विशद विवेचन किया गया है । वहीं से इसका अर्थ देखना चाहिये ॥ २७४ ॥

माया पुरुष विवेक विज्ञ पुरुष को विज्ञानाकल पुरुष कहते हैं। प्रश्नकर्त्ता पूछता है कि क्या ऐसे पुरुष का यह स्वभाव होता है या उसका यह स्वरूप है या इसमे भी कुछ विशेष उसमें सम्भव है ? इस पर कह रहे हैं—

विज्ञानाकल स्तर प्राप्त साधक स्वनामधन्य होता है । श्लोक में प्रयुक्त 'प्राप्त' के एक वचनत्व से यही ध्वनित हो रहा है । उसके अधिकार की सीमा आकलन का विषय है । उसी अधिकारीय स्तर पर पहुँच कर शिवाद्वयभाव का

अधिकारत इति अधिकारमात्रावशेषादित्यर्थः। सदेति कदाचिदपि अन्यथा न भवेदिति भावः। शिवादिति नत्वनन्तेशचोदनया। यदुक्तं प्राक्

'स पुनः शांभवेच्छातः शिवाभेदं परामृशन्।
क्रमान्मन्त्रेशतन्नेतृरूपो याति शिवात्मताम्॥' (९।९३) इति॥

ननु भवत्वेवं, पारमेश्वराच्छक्तिपातात्पुनः किं स्यादित्याशङ्क्याह

**पत्युः परस्माद्यस्त्वेष शक्तिपातः स वै मलात्॥ २७६॥**
**अज्ञानाख्याद्वियोक्तेति शिवभावप्रकाशकः।**

यः पुनरयं परस्मात् नत्वपरस्माद्विष्ण्वादेः पत्युः सकाशाच्छक्तेः पातः, स एव शिवभावावभासनेन मोक्षप्रदो यस्मादज्ञानाख्यात् न तु द्रव्यरूपान्मलाद्वियोक्ता वियोजक इत्यर्थः। यदुक्तं प्राक्

**'मलाद्विविक्तमात्मानं पश्यंस्तु शिवतां व्रजेत्।'** (९।१८८) इति॥

---

सतत परामर्श करता रहता है। परिणामतः उसके मल निर्मूल हो जाते हैं। वह क्रमशः शैव महाधाम पर जाने के लिये उत्कर्ष की सोपान परम्परा को पार करते-करते पहले मन्त्र बनता है, कभो उससे भी आगे मन्त्रेश्वर बन जाता है। इसी तरह वह विशाल अन्तराल को अपनो साधना से साधकर शिव को भी पा लेता है। इस सम्बन्ध में श्रीत० द्वितीय भाग पृ० ४०४ आ० ९।९२ कारिका में विशद विवेचन किया गया है, इसका अर्थ वहीं द्रष्टव्य है॥ २७५॥

यह क्रमिक शैव परामर्श का परिणाम है। यह तो समझ में आने वाली बात है। तब फिर पारमेश्वर शक्तिपात से क्या होता है? इस जिज्ञासा का समाधान कर रहे हैं—

पारमेश्वर शक्तिपात का परिणाम और भो महत्त्वपूर्ण है। ऊपर क्रमिक साधना से साधक में शिवाद्वय परामर्श जन्य चिदैक्यदार्ढ्य उत्पन्न होता है, यह कहा गया है, पर शक्तिपात तत्काल अज्ञान रूपी मल को निर्मूल कर देता है। अज्ञान के वियोग का तात्पर्य शैवमहाभाव के अवभासन से मोक्ष की प्राप्ति से है। इसी तात्पर्य को शिवभाव प्रकाशक शब्द भी व्यक्त कर रहा है। यह शक्तिपात भो साधारण विष्णु आदि पतियों से नहीं अपितु परात्पर परमेश्वर से प्राप्त शक्तिपात होता है। अतः इसका विशेष महत्त्व स्वाभाविक है। श्रीत० द्वितीय

ननु स एवैवं कस्मादित्याशङ्क्याह

**नान्येन शिवभावो हि केनचित्संप्रकाशते ॥ २७७ ॥**

अन्येनेति विष्ण्वादिसंबन्धिना, ते ह्यत्र भ्रान्ता एवेत्यभिप्रायः ॥ २७७ ॥

अत एवाह

**स्वच्छन्दशास्त्रे तेनोक्तं वादिनां तु शतत्रयम् ।**
**त्रिषष्ट्यभ्यधिकं भ्रान्तं वैष्णवाद्यं निशान्तरे ॥ २७८ ॥**
**शिवज्ञानं केवलं च शिवतापत्तिदायकम् ।**

चोऽवधारणे, तेन केवलं शिवज्ञानमेव शिवतापत्तिदायकमित्यर्थः । एतच्च संवादितं प्राग्बहुशः ॥

एवं च यदेव पारमेश्वर्याः शक्तेरधिष्ठानं शिवतापत्तिं दद्यात्, तदेव शक्तिपातशब्दव्यपदेश्यं न त्वेवमेव, न ह्येवंविधं किंचिज्जगत्यस्मिन्समस्ति यत्पारमेश्वर्या शक्त्या नाधिष्ठितम् । तदाह

---

भाग ९।१८८ पृ० ४९१ में इसकी चर्चा आ चुकी है कि मल से वियुक्त स्वात्म-साक्षात्कार से शिवत्व की प्राप्ति हो जाती है ॥ २७६ ॥

शास्त्रकार का यह स्वानुभूत उद्घोष है कि दूसरा कोई ऐसा माध्यम नहीं है, जिससे शैव महाभाव प्रकाशमान हो जाता है । आचार्य जयरथ उसमें कुछ और जड़ देते हैं और यह स्पष्ट करते हैं कि मोक्ष के सम्बन्ध में विष्णु ब्रह्म आदि अधःस्थ अधिकारियों का आश्रय लेने वाले उपासक पथभ्रान्त हो हैं । केवल यही पथ निर्भ्रान्त है ॥ २७७ ॥

स्वच्छन्द तन्त्र में स्वयं भगवान शङ्कर ने इसकी चर्चा की है । वहाँ विविध मतवादियों की शताधिक भ्रान्त मान्यतायें भी वर्णित हैं । निशान्तर ( निशाटन शास्त्र ) में ६३ से भी अधिक वैष्णवादि भ्रान्त मान्यताओं की बात कही गयी है । वस्तुतः शिवता की उपलब्धि का एक मात्र आधार केवल शिव का ज्ञान है । इस तथ्य का यथावसर बारम्बार प्रतिपादन किया गया है ॥ २७८ ॥

प्रश्न है कि 'जो शिवतापत्ति प्रद परमेश्वर सम्बन्धिनी शक्ति का अधिष्ठान है, वही शक्तिपात शब्द व्यपदेश्य है' क्या यह ऐसे ही कहा गया है ? नहीं । संसार में कोई ऐसी वस्तु नहीं है, जो ऐश शक्ति से अधिष्ठित न हो ? इसलिये

**शिवतापत्तिपर्यन्तः शक्तिपातश्च चर्च्यते ॥ २७९ ॥**

**अन्यथा किं हि तत्स्याद्यच्छैव्या शक्त्यानधिष्ठितम् ।**

अत एवोक्तयुक्त्या तांस्तानप्यधितिष्ठन्ती विष्ण्वादिशक्तिर्न मोक्षप्रदेति नेहास्याः शक्तिपाततया परिगणनम् । तदुक्तमनेनैवान्यत्र

**'वैष्णवादीनां तु राजानुग्रहवन्न मोक्षान्ततेति नेह तद्विवेचनं, शिव-शक्त्यधिष्ठानं तु सर्वत्रेत्युक्तम् । सा परं ज्येष्ठा न भवति अपि तु घोरा घोरतरा वा ॥'' (तं० सा० ११ आ०)** इति ॥

अतश्च

**विषयेष्वेव संलीनानधोऽधः पातयन्त्यणून् ।**
**रुद्राणूया: समालिङ्ग्य घोरतर्योऽपराः स्मृताः ॥'**

इत्याद्युक्तशक्त्यधिष्ठितानां भेदावष्टम्भभाजां वैष्णवादोनामस्मिन्संविदद्वैतात्मनि शिवज्ञानेऽधिकारो नास्तीत्याह

---

शक्तिपात वहीं तक आकलित करने का विषय माना जाता है, जहाँ तक शिवता की सम्प्राप्ति होती हो । शिवतापत्तिपर्यन्त शब्द का यहो तात्पर्य है । अन्यथा यह स्वयं सोचने की बात है कि संसार में वह कौन सी ऐसी वस्तु है, जो शैव शक्ति से अधिष्ठित न हो ? अर्थात् सारी वस्तुएँ शैवी शक्ति से हो अधिष्ठित हैं। विष्णुआदि शक्तियों को शक्तिपातप्रदरूप से कलना नहीं की जाती । नीर-क्षीर-विवेक हिन्दो भाष्य संवलित तन्त्रसार द्वितीय खण्ड पृ० १०८-११० में इस विषय का विशद विवेचन किया गया है । इसका वहीं से सन्दर्भ लेना चाहिये ॥ २७९ ॥

इसलिये यह दर्शन स्पष्ट रूप से प्रतिपादित करता है कि,

"विषयों में संलग्न पुद्गल अणु पुरुषों को मायारूपा अपरा घोरतरा शक्तियाँ नोचे और नोचे को ओर ही गिरा देती हैं ।"

ऐसो शक्तियों से अधिष्ठित भेदवादो वैष्णव आदि मतावलम्बियों के लिये इस संविदद्वैतात्मक दर्शन में कोई स्थान नहीं अथ च शैवज्ञान में इनका कोई अधिकार नहीं । यहो तथ्य दृष्टि में रखकर कह रहे हैं कि,

**तेनेह वैष्णवादीनां नाधिकारः कथंचन ॥ २८० ॥**
**ते हि भेदैकवृत्तित्वादभेदे दूरवर्जिताः ।**

नन्वेषामपि कदाचिदनुग्राहिका शैवो शक्तिश्चेत्संबध्यते, तदा किं कर्तव्यमित्याशङ्क्याह

**स्वातन्त्र्यात्तु महेशस्य तेऽपि चेच्छिवतोन्मुखाः ॥ २८१ ॥**
**द्विगुणा संस्क्रियास्त्येषां लिङ्गोद्धृत्याथ दीक्षया ।**

लिङ्गोद्धृत्येत्युपवासादिक्रमण वक्ष्यमाणरूपया ॥ २८१ ॥

नुन पारमेश्वर्या शक्त्या चेदयमधिष्ठितस्तदन्यवदेक एवास्य दोक्षादिः संस्कारोऽस्तु, द्विगुणेनानेन कोऽर्थ इत्याशङ्क्यां दृष्टान्तप्रदर्शनेन प्रशमयति

**दुष्टाधिवासविगमे पुष्पैः कुम्भोऽधिवास्यते ॥ २८२ ॥**
**द्विगुणोऽस्य स संस्कारो नेत्थं शुद्धे घटे विधिः ।**

---

इसलिये उनका यहाँ (इस दर्शन को पावन विमर्श-भूमि में) कथंचन किसी प्रकार का कोई अधिकार नहीं। चूँकि वे भेदवादी हैं। अतः इस अद्वयदर्शन के क्षेत्र में दूर से ही परिवर्जित ( निषिद्ध ) हैं ॥ २८० ॥

प्रश्न उपस्थित होता है कि यदि कभो कदाचित् अनुग्रहात्मिका शैव शक्ति का इनसे सम्बन्ध हो जाये तो क्या करना चाहिये ? इस पर कह रहे हैं कि—

भगवान् भूतभावन महेश्वर स्वतन्त्र परम तत्त्व हैं। इनके स्वातन्त्र्य वश यदि ये शिवता की ओर उन्मुख हो जाते हैं, तो इनको संस्कार सम्पन्न बनाने के लिये दोहरी संस्क्रिया अपेक्षित होगो। पहले लिङ्गोद्धार प्रक्रिया अपनानी पड़ेगी और उसके बाद शैवो दोक्षा देनो अनिवार्य होगो।

लिङ्गोद्धार प्रक्रिया में उपवास आदि के क्रम से ८ पाशों से मुक्त किया जाता है। पाशमुक्त होने पर गुरु देव उन्हें शाङ्करी दीक्षा देकर अनुगृहीत करते हैं ॥ २८१ ॥

यहाँ यह सोचने की बात है कि वैष्णव आदि भेदवादी वर्ग भो पारमेश्वरी शक्ति से अधिष्ठित है। यह तो पहले ही कहा जा चुका है। यदि यह तथ्य सत्य पर आधारित है, तो दूसरों की तरह इनको भो एक ही दीक्षा संस्कार में

एतदेवोपसंहरति

**इत्थं श्रीशक्तिपातोऽयं निरपेक्ष इहोदितः ॥ २८३ ॥**

नन्वेवमागमान्तरविरोधो भवेद्यत्र तु कर्मसाम्यादिसापेक्षत्वमस्योक्तं यन्मतङ्गे

**'समत्वधर्मव्यापारः कष्टोऽयं स्यात्सुदुष्करः ।** इति,

किरणेऽपि

**'समे कर्मणि संजाते तत्कालं योग्यतावशात् ।**
**तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा ॥**
**सर्वज्ञः स शिवो यद्वत्किंचिज्ज्ञत्वविवर्जितः ।** इति,

---

दीक्षित करना युक्ति संगत है। ऐसी स्थिति में इस दोहरी दीक्षा का क्या अर्थ है ? इस बात को दृष्टान्त के माध्यम से स्पष्ट कर रहे हैं—

जैसे घड़े को फूल से वासित करना है। पहले यह देखना आवश्यक होता है कि घड़े में तो कोई दुर्गन्ध आदि नहीं है। दोष युक्त रहने पर पहले घड़े को शुद्ध करते हैं। उसके बाद घड़े को फूलों के द्वारा वासित किया जाता है। यह प्रक्रिया दोष युक्त घड़े में तो अपनायी जाती है किन्तु शुद्ध घड़े में यह विधि नहीं होती। इस प्रकार शक्तिपात का पूर्ण रूप से और उसके निरपेक्ष रूप में यहाँ वर्णन किया गया। निरपेक्ष शक्तिपात का यह प्रकरण शक्तिपात के विशद विवेचन में चरितार्थ होता है ॥ २८२-२८३ ॥

उक्त शक्तिपात के सन्दर्भों से परिचित तथा अन्य शास्त्रीय दृष्टिकोणों का अध्येता अब प्रश्न करता है कि दूसरे आगम शक्तिपात सम्बन्धी जो विचार व्यक्त करते हैं, उनसे इस वर्णन से अन्तर्विरोध हो रहा है। उन शास्त्रों में कर्मसाम्य आदि सापेक्ष शक्तिपात का उल्लेख है। जैसा कि मतङ्ग शास्त्र कहता है कि,

"समत्व धर्म का व्यापार अत्यन्त कष्टकर है और सुदुष्कर भी है।"

किरण शास्त्र में यही बात कुछ दूसरे अन्दाज में कही गयी है। वहाँ कहते हैं कि,

तत्किमेतदुक्तमित्याशङ्क्याह

**अनयैव दिशा नेयं मतङ्गकिरणादिकम् ।**
**ग्रन्थगौरवभीत्या तु तल्लिखित्वा न योजितम् ॥ २८४ ॥**

नेयमिति पूर्वपक्षयोजनादिक्रमेण व्याख्येयमित्यर्थः ॥

न केवलमेतदस्मदागम एवोक्तं, यावच्छ्रुत्यर्थोपजीविनि पुराणादावपी-त्याह

**पुराणेऽपि च तस्यैव प्रसादाद्भक्तिरिष्यते ।**
**यया यान्ति परां सिद्धिं तद्भावगतमानसाः ॥ २८५ ॥**

इत्यस्य प्रथममर्धम् ॥ २८५ ॥

---

"सम कर्म के सम्यक् सम्पन्न होने के अवसर पर तात्कालिक योग्यता के फलस्वरूप तीव्र शक्ति संपात होता है। इस अवसर पर गुरु द्वारा यदि शिष्य दीक्षित हो जाता है, तो वह सचमुच सर्वज्ञ हो जाता है। यह किंचित्-ज्ञत्व में जो किञ्चित्त्व का संकुचित धर्म है, उससे रहित हो जाता है। यही पूर्ण शिव की अवस्था है, जिसे वह उपलब्ध हो जाता है।"

इन आगमों की उक्तियों के विरोध की दृष्टि को ध्यान में रखकर कह रहे हैं कि,

ये मतङ्ग और किरण शास्त्रीय विचार इसी दिशा में नेय हैं अर्थात् ये जो कुछ भी कहते हैं, उनको उन्हीं की दृष्टि से जानने और समझने की जरूरत है। यहाँ उनके उल्लेख न करने के दो कारण हैं। १—ग्रन्थ के गौरव के भय से यहाँ वे बातें नहीं लिखी गयीं और दूसरी बात यह है कि, शक्तिपात को उनकी दृष्टि से ही वहाँ परिभाषित किया गया है। यहाँ उसका योजन अनावश्यक था ॥ २८४ ॥

इन बातों का प्रतिपादन न केवल इस षडर्ध दर्शन में ही किया गया है अपितु वेदों के उपजीव्य पुराण आदि भी यही कहते हैं—

समस्त पुराणों का यही प्रतिपाद्य विषय है कि, उसी परम कृपालु परमेश्वर की प्रसन्नता के परिणामस्वरूप भक्ति की प्राप्ति होती है। इसी भक्ति की महिमा से आराध्य में आत्मसात् हो गये हैं मन जिनके ऐसे श्रेष्ठ भक्त परासिद्धि प्राप्त करते हैं। कहा गया है कि,

एतदेव व्याचष्टे

**एवकारेण कर्मादिसापेक्षत्वं निषिध्यते ।**
**प्रसादो निर्मलीभावस्तेन संपूर्णरूपता ॥ २८६ ॥**
**आत्मना तेन हि शिवः स्वयं पूर्णः प्रकाशते ।**

इह तावदीश्वरः स्वस्वातन्त्र्यात् संकोचावभासनेनाणुतां परिगृह्णन् प्रत्यावृत्य निर्मलं पूर्णमपि रूपमादर्शयति, इत्युक्तम्, तत्तस्य प्रसादः प्रसन्नत्वं मलापगमः, तेन च निर्मलीभावेन संपूर्णरूपता यतः स्वयमेव शिवः परमेश्वरः

---

"उसी के प्रसाद से मनुष्यों में भक्ति की उत्पत्ति होती है।"

इस कथन से दो बातें स्पष्ट होती हैं। १—भक्ति से परासिद्धि की प्राप्ति होती है। २—भक्ति के लिये आराध्यगत मानसिकता अनिवार्य है ॥२८५॥

ऊपर के श्लोक में तस्यैव शब्द में 'एव' इस अवधारणार्थक अव्यय का प्रयोग किया गया है। इससे यह सिद्ध होता है कि, आराध्य का प्रसाद ही एक मात्र भक्ति का कारण है। यह कर्म पर निर्भर नहीं करता। कर्म सापेक्षता यहाँ निषिद्ध है। जहाँ तक प्रसाद का प्रश्न है, यह निर्मलता की भावना का भव्य रूप है। इस निर्मलता से ही सम्पूर्ण रूपता की अवाप्ति होती है। मल से संकोच होता है। संकोच सर्वदा खण्डित करता है और निर्मलता सम्पूर्णता प्रदान करती है। इसी आधार पर यह कहा जाता है कि, स्वात्म में सम्पूर्णतया पूर्ण शिव स्वयं प्रकाशमान है।

परमेश्वर स्वात्म स्वातन्त्र्य के प्रभाव से स्वात्म संकोच का अवभासन करता है। स्वयम् अणुता का वरण करता है। उद्वेष्टन क्रम में वही प्रत्यावर्त्तन करता है। अपने निर्मल ( मल रहित ) पूर्णरूप को आदर्शवत् परिदर्शित करता है।

उसी का प्रसाद भक्ति प्रदान करता है। यहाँ प्रसन्नता का अर्थ ही मल का निराकरण है। मल के प्रभाव से मलावृत अणु को प्रसन्नता का कोई अर्थ नहीं होता। इसी निर्मलीभाव से सम्पूर्ण-रूपता प्राप्त होती है। इस प्रकार परमेश्वर शिव स्वयं दो तरह से प्रकाशित होता है। एक तो स्वयं पूर्ण प्रकाश-

तेनात्मना तत्तत्संकुचितात्मावच्छेदं परिगृह्यापि पूर्णः प्रकाशते प्रत्यावृत्तपूर्णदृक्क्रियास्वभावो भवेत्। यदुक्तं 'परां सिद्धि यान्ति' इति ॥ २८६ ॥

एतदेव व्यतिरेकद्वारेण निदर्शयति

**शिवोभावमहासिद्धिस्पर्शवन्ध्ये तु कुत्रचित् ॥ २८७ ॥**
**वैष्णवादौ हि या भक्तिर्नासौ केवलतः शिवात् ।**

या पुनः कस्मिंश्चिदेवमुक्तयुक्त्या शिवीभावापत्तिविरहिणि वैष्णवादौ भक्तिः, नासौ केवलतः शिवात् कर्माद्यनपेक्षिणः परमेश्वरान्न भवेदित्यर्थः ॥ २८७ ॥

ननु समनन्तरमेवेदमुक्तं यच्छैव्या शक्त्यानधिष्ठितं न किंचिदपि स्यादिति, तदिदानीं वैष्णवादौ भक्तिः शिवान्नेति कथमिवाभिधीयते इत्याशङ्क्याह

---

मय होने से स्वयं सर्वात्मना भासमान है। दूसरे सकल अणु वर्ग को जो संकोच को स्वीकार कर खण्डित रूप में हो कर्मसापेक्ष भोगों का उपभोग कर रहा है, उन सबको लेकर भी सम्पूर्ण परमेश्वर पूर्णतया भासमान है। इसको एक शब्द में 'प्रत्यावृत्त पूर्ण दृक्क्रिया स्वभाव' शिव कहते हैं। परमेश्वर के इसी रूप की प्राप्ति को परा सिद्धि कहते हैं ॥ २८६ ॥

इसी तथ्य को व्यतिरेक पद्धति से अभिव्यक्त कर रहे हैं—

शैव महाभाव की सिद्धि जिसे छू तक नहीं गयी है, ऐसा वैष्णव मत समर्थित जो भक्ति सिद्धान्त है, वह भक्ति के उस स्तर का स्पर्श तक नहीं कर सकता, जो परमेश्वर के कैवल्य भाव से निष्पन्न होती है।

किसी ऐसे वैष्णव आदि उपासक में जो शिवीभाव की समुपलब्धि से रहित है, उसमें जो भक्ति दीख पड़ती है, वह केवल सर्वकर्म निरपेक्ष परमेश्वर शिव से नहीं होती। शैव महाभाव सम्पन्न भक्ति का एक अलग ही स्वरूप है, जो महामाहेश्वरों द्वारा कथंचित् प्राप्त की जा सकती है ॥ २८७ ॥

प्रश्न कर्त्ता यह पूछता है कि अभी अभी आप ने यह कहा है कि शैवी भक्ति से जो अधिष्ठित नहीं, उसका कोई अस्तित्व नहीं। इस समय यह कहना कि वैष्णव आदि में जो भक्ति होती है, वह शिव से नहीं हो सकती। कहाँ तक उचित है? इस पर कह रहे हैं कि,

**शिवो भवति तत्रैष कारणं न तु केवलः ॥ २८८ ॥**
**निर्मलश्चापि तु प्राप्तावच्छित्कर्माद्यपेक्षकः ।**

तत्रेति विष्ण्वादिविषयायां भक्तौ केवलत्वं निर्मलत्वं च व्यतिरेचयितु-मपित्वित्याद्युक्तम् । प्राप्तावच्छिदिति विष्ण्वादिरूपोपग्रहावच्छिन्नतया परिगृहीतसंकोचकलङ्क इत्यर्थः ॥ २८८ ॥

ननु कस्यायमर्थ इत्याशङ्क्याह

**यया यान्ति परां सिद्धिमित्यस्येदं तु जीवितम् ॥ २८९ ॥**

नहि तदेकरूपत्वाभावे भक्तेरुक्तरूपा परा सिद्धिर्भवेदिति भावः ॥ २८९ ॥

एतच्च न्यायागमकोविदैर्गुरुभिरप्यनुमतमित्याह

**श्रीमानुत्पलदेवश्चाप्यस्माकं परमो गुरुः ।**
**शक्तिपातसमये विचारणं प्राप्तमीश न करोषि कर्हिचित् ।२९०।**

---

वहाँ भी शिवोभाव होता है। उस भक्ति का कारण भी शिव ही होता है। यह ध्यातव्य है कि वहाँ जो शिव कारण होता है, वह निर्मल और केवल नहीं होता अपितु विष्णु आदि देवों के रूप में संकोच को प्राप्त करने के कारण अवच्छिन्नता सापेक्ष ही होता है।

इस तथ्य का पूरा समर्थन श्लोक १३।२८५ में उक्त 'यया यान्ति परां सिद्धि' वाक्य से होता है। वहाँ स्पष्ट कर दिया गया है कि, प्रसाद रूपी प्रसन्नता अर्थात् पूर्ण मलापगम से तद्भावगत-मानस परम-उपासक परा सिद्धि रूपी मोक्षलक्ष्मी को प्राप्त कर लेते हैं। उस कथन का यही रहस्य है, यह उसका जीवित है—प्राण है ॥ २८८-२८९ ॥

यह उक्त वर्णन न्यायागम पारङ्गत गुरुजनों द्वारा भी समर्थित और अनुमत है। शास्त्रकार अपने परम गुरु का नाम बड़ी श्रद्धा और आस्थापूर्वक लेते हुए उनके लिये एकवचन का प्रयोग कर उनके तत्कालीन गुरुजनों में प्रथम स्थान देने में गौरव का अनुभव कर रहे हैं। श्रीमान् परम गुरुवर्य उत्पल देव ने भी परमेश्वर शक्तिपात के सम्बन्ध में 'कर्हिचित्' और 'प्राप्तम्' इन दोनों शब्दों के माध्यम से उसकी निरपेक्षिता पर ही बल दिया है।

**अद्य मां प्रति किमागतं यतः स्वप्रकाशनविधौ विलम्बसे ।**
**कर्हिचित्प्राप्तशब्दाभ्यामनपेक्षित्वमूचिवान् ॥२९१॥**
**दुर्लभत्वमरागित्वं शक्तिपातविधौ विभोः ।**

श्रीमानुत्पलदेवश्चापि विभोः शक्तिपातविधावनपेक्षित्वाद्यूचिवानिति सम्बन्धः। यत्तत्र योग्यायोग्यत्वलक्षणं विचारणं प्राप्तं न्यायोपनतमपि कर्हिचित्कादाचिदपि विस्मृत्यापि न करोषि यतः कर्मादिनिरपेक्षतया स्वेच्छामात्रमेवात्र भवतो निबन्धनम्। अत एवात्र दुर्लभत्वमपि। तद्धि लोके सुलभमुच्यते, यत्किञ्चिदुपायमपेक्ष्य भवति येन तत्संभरणेन नूनं तल्लाभो भवेत्। अत एवात्रारागित्वमपि। विष्ण्वादयो हि कृतमेव जनमनुगृह्णन्ति नाकृतमिति

---

उन्होंने कहा है कि, "हे ईश ! आप तो अनुग्रह रूप शक्तिपात करते समय जो विचारणा प्राप्त होती है—उस पर कभी विचार नहीं करते। फिर भी हमारे लिये आप विलम्ब क्यों कर रहे हैं? वह कौन सी बात बोच में आ गयी है, जिससे प्रभो ! स्वात्म प्रकाश विधि में इतना विलम्ब कर रहे हो ?"

इस हृदयोद्‌गार में श्रीमान् उत्पल देव के उदात्त हृदय के नैर्मल्य का उद्‌घाटन हो रहा है। इसमें विचारणा प्राप्त शब्द से यह बताया गया है कि अनुग्रह के समय योग्यायोग्य पात्रापात्र को विचारणा स्वभावतः प्राप्त होती हो है। सब ऐसा विचार करते हैं, परमकृपालु परमेश्वर ऐसा कभो नहीं करते।

इस तरह दोनों 'प्राप्त' और 'कभी भी' शब्दों द्वारा विभु को परम कृपालुता, अनुग्रह सम्बन्धो निरपेक्षता, दुर्लभता, अरागिता इत्यादि का वर्णन ऊपर की प्रार्थना में किया गया है।

भगवान् स्वेच्छामात्र से शक्तिपात करते हैं। उपाय के माध्यम से प्राप्त शक्तिपात तो सुलभ होता है। भक्ति आदि का उपाय हुआ और देवानुग्रह प्राप्त हुआ। यहां ऐसा नहीं हो सकता। विष्णु आदि देव उन्हीं पर अनुग्रह करते हैं, जो उनकी सदा उपासना में संलग्न रहते हैं। जो नहीं रहते, वे उनकी कृपा के अधिकारी नहीं होते। इससे यह भी प्रतीत होता है कि, ऐसे देव भी राग द्वेष वशीभूत होते हैं? भगवान् भूतभावन निरपेक्ष शक्तिपात करते हैं। यह इनका सर्वातिशायो महत्त्व और वैलक्षण्य है। इस आधार यह प्रार्थना इस प्रकार की

रागद्वेषविवशा इव लक्ष्यन्ते, भवान् पुनः सर्वनिरपेक्षमेवैतत्कुरुत इति। अत एव निरपेक्षस्वतन्त्रशक्तिपातक्रमानुरूपमीशेत्यामन्त्रणम् ॥

न केवलं कर्हिचित्प्राप्तशब्दाभ्यामेवैतदूचिवान्, यावदपरार्धेनापीत्याह

**अपरार्धेन तस्यैव शक्तिपातस्य चित्रताम् ॥ २९२ ॥**

**व्यवधानचिरक्षिप्रभेदाद्यैरुपवर्णितैः ।**

उपवर्णितैरिति समनन्तरमेव, यतोऽत्र मां प्रति कस्माद्विलम्बसे व्यवधानादिना कालं क्षिपसि क्षिप्रमेव स्वप्रकाशं कुर्विति तात्पर्यम् ॥

न केवलमेतत्संविदद्वैतनिष्ठैरेव गुरुभिरुक्तं यावच्छैवशास्त्रव्याख्यातृभिरपीत्याह

---

जा रही है कि हे निरपेक्ष, परम स्वतन्त्र परमेश्वर अपनी कृपा के अनुरूप ही मुझ उत्पलदेव पर शक्तिपात करने में अब अधिक विलम्ब न करें ॥ २९०-२९१ ॥

उनके एक और प्रयोग का इस प्रसङ्ग में असामान्य महत्त्व है। श्लोक २९० के बाद श्लोक २९१ के ऊपर का आधा भाग है, वह पूरा का पूरा इस प्रसङ्ग को ओर भी करुणामय आत्मीयता से ओतप्रोत कर रहा है। आराधक आत्म निरीक्षण करता है, अपने को देखता-तोलता है, योग्यता के निकष पर निकषायित करता है, आराध्य के औढर दानशीलता और अकारण कृपालुता का अनुचिन्तन करता है और पूछ बैठता है अपने, अपने-बने आराध्य से। शिव ! यह अनपेक्षित व्यवधानों से कालक्षेप ! इसका कारण क्या है भगवन् ! आमने सामने का आराध्य और आराधक का यह शब्दचित्र यह बोलता सा कह रहा है कि ना ! अब विलम्ब की कोई बात नहीं। इस वर्णन से यह भी अनुमित हो रहा है कि, शक्तिपात में व्यवधान पड़ते हैं। कभी विलम्ब भी होता है। साधक के सौभाग्य से इसमें क्षिप्रता भो होती है। श्रीमान् उत्पल इसी क्षिप्र शक्तिपात के आकांक्षी हैं॥ २९२ ॥

इस शास्त्र के व्याख्याताओं ने भी अपनी व्याख्याओं में इसी तथ्य को व्याख्यायित किया है। केवल संविदद्वयभावनिष्ठ चिदैक्यदार्ढ्य-परिवृढ प्रज्ञा-पुरुषों ने ही इस पर प्रकाश नहीं डाला है। यही कह रहे हैं कि,

**श्रीमताप्यनिरुद्धेन शक्तिमुन्मीलिनीं विभोः ॥ २९३ ॥**

**व्याचक्षाणेन मातङ्गे वर्णिता निरपेक्षता ।**

**स्थावरान्तेऽपि देवस्य स्वरूपोन्मीलनात्मिका ॥२९४॥**

**शक्तिः पतन्ती सापेक्षा न क्वापीति सुविस्तरात् ।**

श्रीमतानिरुद्धेनापि सुविस्तरान्निरपेक्षता वर्णितेति संबन्धः । शक्तिमुन्मीलिनीमिति । यदुक्तं तत्र

**'यदास्योन्मीलिनी शक्तिः शिवरागेण रञ्जिता ।**
**निपतत्यतितेजस्का नित्यानुग्रहशालिनी ॥'** (१।४।४५) इति ।

स्थावरान्ते इत्यनेनात्यन्तमयोग्यानामपि स्वरूपमुन्मीलयतीति सूचितम् ॥

इहेदानीं शक्तिपातवैचित्र्यमूलमधिकारवैचित्र्यमप्यभिधातुमुपक्रमते

---

श्रीमान् आचार्य अनिरुद्ध ने भी विभु परमेश्वर की शक्ति को उन्मीलित करने वाली निरपेक्षता का वर्णन मतङ्ग शास्त्र की व्याख्या में किया है । उनका कहना है कि आचेतन आस्थावर समस्त जीवों पर उनके स्वात्म स्वरूप को खोल कर रख देने वाली शक्तिपातमयी परमात्म शक्ति कभी सापेक्ष नहीं होती । उन्मीलनीशक्ति सम्बन्धी वह यह पद्य है—

"शिव राग से रञ्जित यह उसकी उन्मीलनी शक्ति जो आत्यन्तिक अनुग्रहशालिनी होती है और अतिशय ओजस्विनी ऊर्जामयी तथा तैजसिक तीव्र आभा से भरी हुई होती है, जब गिरती है ( तो साधक के सौभाग्य का जागरण हो जाता है ) ।"

श्लोक में स्थावरान्त शब्द का प्रयोग यह सिद्ध करता है कि, शैव शक्तिपात अत्यन्त अयोग्य अधिकारियों को भी स्वरूप का साक्षात्कार करा देने में समर्थ है ॥ २९३-२९४ ॥

यह तो निश्चित ही है कि, शक्तिपात में जिस वैचित्र्य के अनुदर्शन होते हैं, उसके मूल में अधिकार वैचित्र्य ही होता है । यहाँ यही प्रतिपादित करने का उपक्रम कर रहे हैं—

एवं विचित्रेऽप्येतस्मिञ्छक्तिपाते स्थिते सति ॥ २९५ ॥
तारतम्यादिभिर्भेदैः समय्यादिविचित्रता ।

तदेवाह

कश्चिद्रुद्रांशतामात्रापादनात्तत्प्रसादतः ॥ २९६ ॥
शिवत्वं क्रमशो गच्छेत् समयो यो निरूप्यते ।
कश्चिच्छुद्धाध्वबन्धः सन् पुत्रकः शीघ्रमक्रमात् ॥ २९७ ॥
भोगव्यवधिना कोऽपि साधकश्चिरशीघ्रतः ।
कश्चित्संपूर्णकर्तव्यः कृत्यपञ्चकभागिान ॥ २९८ ॥

---

इस प्रकार इस चित्र विचित्र शक्तिपात का वर्णन सभी करते हैं। यहाँ यह निश्चित रूप से कहा जा सकता है कि, इसके मूल में तारतम्य आदि भेदों से भावित समयी आदि दीक्षा क्रम की विचित्रता भी मुख्यतया विद्यमान रहती है ॥ २९५ ॥

इसी तारतम्य का, अधिकारियों की श्रेणी की स्तरीयता का निर्देश करते हुए कह रहे हैं कि,

१—कोई साधक रुद्र का आंशिक आपादन कर पाता है। उसी के प्रसाद से क्रमशः आंशिकता के सोपान पर चढ़ता हुआ शिवत्व के शिखर को पा लेता है। ऐसा साधक समयी होता है।

२—कोई ऐसा भी होता है, जो पुत्रक दीक्षा प्राप्त कर अक्रम भाव से ही शक्तिपात पवित्र हो जाता है।

३—कुछ ऐसे लोग भी हैं, जिनके भोग की अवधि पर ही यह निर्भर है। इसमें भोग की अवधि छोटी भी हो सकती है और बड़ी भी। दोनों का योगायोग शक्तिपात को प्रभावित करता है। यह साधक में भोग के प्रति झुकाव पर निर्भर होता है।

४—कोई साधक इस श्रेणी का भी होता है, जो अपने सम्पूर्ण कर्त्तव्यभाव को पूरी तरह पार करता है। कृत्यपञ्चक सम्पन्न रूप में वह अवस्थित रहता है। वह उच्चस्तरीय अधिकारी साधक होता है। उस पर शक्तिपात घटित होता है। स्तरीय आचार्य या गुरु इस श्रेणी में आते हैं।

**रूपे स्थितो गुरुः सोऽपि भोगमोक्षादिभेदभाक् ।**
**समय्यादिचतुष्कस्य समासव्यासयोगतः ॥ २९९ ॥**
**क्रमाक्रमादिभिर्भेदैः शक्तिपातस्य चित्रता ।**

क्रमशः इति पुत्रकदीक्षानन्तरमत एवात्र मन्दः शक्तिपातः । शीघ्रमिति देहपातसामनन्तर्येण । अक्रमादिति सत्यपि देह इत्यर्थः । भोगव्यवधिश्च चिरं शीघ्रं वा भवेदित्युक्तं चिरशीघ्रत इति ! भोगमोक्षादिभेदभागित्यर्थाच्छिष्यं प्रति, स्वयं हि तस्य सम्पूर्णकर्तव्यत्वमुक्तम् । तारतम्यादेव च तयोरपि तारतम्यमिति भेदशब्देनोक्तम् । समासव्यासयोगत इति क्रमाक्रमादिभिरिति च, तत्र क्रमादादौ समयी ततः पुत्रकः, तत आचार्य इति सामस्त्यम्, अक्रमात्कश्चित्पुत्रक एव, नत्वादौ समय्यपि, कश्चिदाचार्य एव, नत्वादौ समयी पुत्रको वेति व्यस्तत्वम् ॥

न केवलमेवं शक्तिपातस्य क्रमाक्रमाभ्यां वैचित्र्यं, यावत्प्रकारान्तरेणापीत्याह

---

ऐसे सभी लोगों की भोग और मोक्ष सम्बन्धी स्थितियाँ शक्तिपात को प्रभावित करती हैं । समयी, पुत्रक, भोग व्यवधिक साधक और आचार्य आदि ये सभी यद्यपि शक्तिपात के पात्र होते हैं, पर इनकी क्रमिकता और अक्रमिकता का भी बड़ा महत्त्व है । समास व्यासभाव के कारण कोई लक्षण किसी में और कोई लक्षण किसी में भी घटित हो सकते हैं । शक्तिपात की विचित्रता के प्रधान कारण यही हैं ।

क्रम की दशा में पहले समयी, इसके बाद पुत्रक फिर सावधिक साधक और आचार्य आते हैं । अक्रम दशा में कभी कोई पुत्रक ही पवित्र होते हैं । इसके पहले समयी आदि नहीं आ सकते । कभी आचार्य की प्रधानता होती है । वहाँ समयी एवं पुत्रक का अक्रम में, आदि में न होना ही स्वाभाविक है ॥ २९६-२९९ ॥

शक्तिपात के वैचित्र्य में केवल तारतम्य ही कारण नहीं है, अपितु प्रकारान्तर से भी शक्तिपात वैचित्र्य दृष्टिगोचर होता है । यही कह रहे हैं—

**क्रमिकः शक्तिपातश्च सिद्धान्ते वामके ततः ॥ ३०० ॥**
**दक्षे मते कुले कौले षडर्धे हृदये ततः ।**
**उल्लंघनवशाद्वापि झटित्यक्रममेव वा ॥ ३०१ ॥**

त्रिकार्थस्यैव परमुत्कृष्टत्वात् । षडर्धे हृदये इति सामानाधिकरण्येन योज्यम् । तदुक्तं

**'वेदाच्छैवं ततो वामं ततो दक्षं ततो मतम् ।**
**ततः कुलं ततः कौलं त्रिकं सर्वोत्तमं परम् ॥'** इति ।

अतश्च सिद्धान्तात्प्रभृति षडर्धपर्यन्तं यथायथं तारतम्याच्छक्तिपातस्यापि तथाभावो भवेदिति भावः । उल्लङ्घनवशादिति सिद्धान्तानन्तरं दक्षे, ततः कुले, ततः षडर्धे चेति । झटित्यक्रममेवेति त्रिकार्थ एवेति ॥ ३०१ ॥

नचैतन्निर्मूलमेवोक्तमित्याह

**उक्तं श्रीभैरवकुले पञ्चदीक्षासुसंस्कृतः ।**
**गुरुरुल्लङ्घिताधःस्थस्रोतो वै त्रिकशास्त्रगः ॥ ३०२ ॥**

---

सिद्धान्त ( वामक ) दक्ष, कुल, कौल और त्रिक नामक हृदय स्थानीय उच्चकोटि के ग्रन्थों में तारतम्य क्रम के साथ अक्रम शक्तिपात का भी वर्णन किया गया है । तारतम्य का उल्लंघन ही अक्रम और तात्कालिक ( झटिति हो जाने वाला ) शक्तिपात होता है ।

षडर्ध शब्द त्रिक दर्शन के लिये प्रयुक्त है । हृदय शब्द इस दर्शन की समस्त रहस्यवादिता को व्यक्त करता है । सार, प्रतीक और मूल तत्त्वात्मक अर्थ में भी हृदय शब्द प्रयुक्त होता है । षडर्ध दर्शन ही दार्शनिक दृष्टि का हृदय स्थानीय दर्शन है । अतः यह सर्वोत्तम दर्शन माना जाता है । लिखा भी गया है कि,

"वेद से शैव, शैव से वाम, वाम से दक्ष, दक्ष से मत, मत से कुल, कुल से कौल दर्शन श्रेष्ठ माने जाते हैं । षडर्ध ( त्रिक ) दर्शन तो सर्वोत्कृष्ट दर्शन है ही ?

इस दृष्टि से इनके शक्तिपात में भी इसी प्रकार की स्तरीय उत्कृष्टता सम्भव है । यही शक्तिपात का प्रकारान्तरीय स्वरूप है ॥ ३००-३०१ ॥

इह

**'होत्री दीक्षा तु सिद्धान्ते तन्त्रे योजनिका स्मृता ।**
**त्रिके समावेशवती कुले स्तोभात्मिका मता ॥**
**सामरस्यमयी कौले दीक्षा पञ्चविधोदिता ।'**

इत्याद्युक्त्या पञ्चविधया दीक्षया सुष्ठु संस्कृतोऽपि त्रिकशास्त्रग एव गुरुरुल्लङ्घिताधरदशाधिशायिशैवादिशास्त्रप्रवाहः सर्वमूर्धाभिषिक्त इत्यर्थः । यदुक्तं

**'वाममार्गाभिषिक्तोऽपि दैशिकः परतत्त्ववित् ।**
**संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकेऽपि सः ॥'** इति ॥ ३०२ ॥

---

ये सारे तथ्य प्रामाणिक हैं, कपोल कल्पित नहीं । यही कह रहे हैं—

श्री भैरव कुल नामक तन्त्र ग्रन्थ में कहा गया है कि, पाँच दीक्षाओं से संस्कार सम्पन्न गुरु ही त्रिक शास्त्र-सार रहस्य का वेत्ता कहलाने का ध्रुव अधिकारी होता है । वह समस्त अधःप्रवाही दृष्टियों से संवलित शास्त्रों की क्षुद्र स्तरीयता को लाँघ कर उत्कर्ष के उच्चतम शिखर पर आरूढ हो चुका होता है । वह सर्वमूर्धाभिषिक्त मूर्धन्य योगिराज होता है । जहाँ तक पंचविधा दीक्षा का प्रश्न है, वह इस उद्धरण से प्रमाणित है—

"सिद्धान्त ( वामक ) तन्त्र की दीक्षा को होत्री दीक्षा कहते हैं । दक्ष और मत तन्त्र की दीक्षा को योजनिका दीक्षा कहते हैं । त्रिक शास्त्र की दीक्षा समावेशवती दीक्षा कही जाती है । कुल-दीक्षा स्तोभात्मिका होती है । सामरस्यमयी दीक्षा कौल मार्ग की दीक्षा मानी जाती है" ।

इन पाचों प्रकार की दीक्षाओं से सम्यक् रूप से संस्कार सम्पन्न होने पर भी यह ध्रुव सत्य है कि, त्रिकशास्त्र के राजमार्ग का अनुयायी उपासक ही उपासना के सर्वोच्च शिखर पर आरूढ रहता है । ऊँची चोटी पर खड़ा व्यक्ति लगता है कि वह सामने की सारी खाइयाँ पार कर ऊपर पहुँचा है तथा सब मस्तकों के ऊपर है । त्रिक शास्त्र संविद्-बोध-बुद्ध पुरुष भी ऐसा ही होता है । सारे शास्त्र प्रवाह को पार कर स्वानुभूति की समावेश भूमि पर अनवरत स्वात्मसंविदानन्द के पीयूष का पान कर रहा होता है । कहा भी गया है कि,

"वाममार्ग में अभिषिक्त होने पर भी कोई परतत्त्ववेत्ता दैशिक कुल, कौल और त्रिक रूप भैरव तन्त्रों के समयविचार से अभिषिक्त करने योग्य है अर्थात् संस्कार्य है" ॥ ३०२ ॥

ननु इह सर्वशास्त्राणां

**'यतः शिवोद्भवाः सर्वे शिवधामफलप्रदा।**

इत्याद्युक्त्या हेतुतः फलतो वा न कश्चिद्विशेषः, तत्कथमिदमुत्तरमिदं चाधर-शास्त्रमित्युक्तमित्याशङ्क्याह

**ज्ञानाचारादिभेदेन ह्युत्तराधरतां विभुः।**
**शास्त्रेष्ववोदृशच्छ्रीमत्सर्वाचारहृदादिषु ॥ ३०३ ॥**

ज्ञानं द्वयाद्वयरूपं, क्रिया बाह्या आन्तरी वा। तन्निमित्तमेव चात्रा-धरौत्तर्यमित्युपपादितं बहुशः ॥ ३०३ ॥

---

प्रश्न करते हैं कि सभी शास्त्र तो समान माने जाते हैं। एक स्थान पर लिखा भी गया है कि,

"सभी शास्त्र शिव से उत्पन्न हुए हैं। अतः सभी पर-शैवधाम-उपलब्धि का फल प्रदान करते हैं"।

इस उक्ति से यह सिद्ध है कि हेतु की दृष्टि से तथा फल के विचार से भी सभी शास्त्र समान हैं। इनमें कोई विशेष नहीं है। ऐसी स्थिति में भी अन्य शास्त्रों को अधरदशाधिशायी कहा गया है। ऐसा क्यों ? इस पर कह रहे हैं कि,

ज्ञान के स्तर और आचार आदि कई दृष्टियों से भगवान् शिव ने शास्त्रों के उन्नत स्तर तथा साथ ही साथ निम्न स्तर को दिग्दर्शित किया है। यह तथ्य श्रीसर्वाचार शास्त्र और सर्वहृदय आदि शास्त्रों में व्यक्त किया गया है।

यह ध्यान देने की बात है कि ज्ञान तो अनन्त हैं पर अद्वय और द्वय ( अद्वैत और द्वैत ) दृष्टि से दो प्रकार के ही होते हैं। इसी तरह क्रिया भी दो प्रकार की ही होती है। १—बाह्य और २सरी आन्तरी। इन्हीं दृष्टियों से और ज्ञान तथा आचारगत भेदों को ध्यान में रख कर शास्त्रों में अधर भाव और उत्तर भाव का प्रकल्पन करने की बात सामने आती है। यही उक्त शास्त्रों में शिव द्वारा भी व्यक्त है ॥ ३०३ ॥

तदेव पठति

**वाममार्गाभिषिक्तस्तु देशिकः परतत्त्ववित् ।**
**तथापि भैरवे तन्त्रे पुनः संस्कारमर्हति ॥ ३०४ ॥**

ननु यदि नाम शैवादावयमभिषिक्तस्तावतैव च परं तत्त्वं वेत्ति, तदस्य भैरवतन्त्रादौ पुनः संस्कारेण कोऽर्थ इत्याशङ्क्याह

**शैववैमलसिद्धान्ता आर्हताः कारुकाश्च ये ।**
**सर्वे ते पशवो ज्ञेया भैरवे मातृमण्डले ॥ ३०५ ॥**

मातृमण्डलकुलकौलादौ च भैरवतन्त्रादिसंस्कृता अपि पशव एवेत्यर्थ-सिद्धम् ॥ ३०५ ॥

---

श्लोक ३०३ के अन्तर्गत आये सर्वाचार शास्त्र के श्लोक का शब्दशः उल्लेख कर रहे हैं—

वाममार्ग में दीक्षा प्राप्त पुरुष भी परतत्त्ववेत्ता देशिक शिरोमणि भैरव तन्त्र में पुनः दीक्ष्य है । इस तन्त्र का संस्कार उसे देना चाहिये । भैरव तन्त्र के रहस्य को जानने के लिये वह तभी अधिकारी हो सकता है । अतः इस संस्कार के लिये उसे अर्ह मानते हैं ॥ ३०४ ॥

ऊपर के श्लोक में परतत्त्ववित् शब्द यह कहता है कि, अन्य शैव प्रवाहों से अभिषिक्त पुरुष उन्हीं शास्त्रगत सिद्धान्तों से परम तत्त्व को जान लेता है ।

यदि ऐसी बात है और वह परम तत्त्व को उन्हीं के माध्यम से जान लेता है, तो फिर भैरव तन्त्र आदि में पुनः संस्कार से क्या लाभ ? इस पर कह रहे हैं कि,

शैव, वैमल सिद्धान्तवादी, आर्हत, कारुक आदि ये सभी मतवादी मातृ-मण्डल की दृष्टि से पशु ही माने जाते हैं । जयरथ का विचार है कि मातृ-मण्डल गृहीत कुल और कौल आदि की दृष्टि से भैरव तन्त्र संस्कृत पुरुष भी पशु ही होता है ॥ ३०५ ॥

आदिशब्दाक्षिप्ते कुलकौलादावप्येतदुक्तमित्याह

**कुलकालीविधौ चोक्तं वैष्णवानां विशेषतः ।**
**भस्मनिष्ठाप्रपन्नानामित्यादौ नैव योग्यता ॥ ३०६ ॥**

भस्मनिष्ठाप्रपन्नानामिति शैवादीनाम् ॥ ३०६ ॥

न केवलमेतदत्रैवोक्तं, यावदन्यत्रापीत्याह

**स्वच्छन्दशास्त्रे संक्षेपादुक्तं च श्रीमहेशिना ।**

तदेव पठति

**अन्यशास्त्ररतो यस्तु नासौ सिद्धिफलप्रदः ॥ ३०७ ॥**

---

कुल-कालो परम्परा में यह बात स्पष्ट कर दी गयी है कि भस्म धारण करने में निष्ठा रखने वाले शिवशरणागति में विश्वास रखने वालों में परतत्त्ववेत्तृत्व को योग्यता नहीं होतो। खास कर वैष्णवों में तो बिलकुल ही नहीं होती है ॥ ३०६ ॥

यही बात स्वच्छन्दतन्त्र में भी दूसरे ढङ्ग से कही गयी है। भगवान् शिव ने संक्षेप में ही यह कहा है कि अन्य शास्त्रों में स्नेह रखकर उन्हीं के अनुसार उपासना करने वाले लोग कभी भी स्तरोय परतत्त्ववेत्तृत्व आदि को सिद्धियाँ नहीं प्राप्त कर सकते। वह मार्ग सिद्धि प्रद गुरु मार्ग नहीं है ॥ ३०७ ॥

समयाचार एक पारम्परिक अनुशासन होता है। इसके अनुसार दोक्षा लेकर शिष्य समयी बनता है। ऐसे शिष्य ही भविष्य में गुरु बनते हैं, अन्य शास्त्ररत नहीं। यही कह रहे हैं—

समयो आदि के क्रम से दोक्षा के अनुशासन को क्रमशः मानते हुए जो उपासक या साधक अभिषेक पाकर पूर्णाभिषिक्त हो जाता है, वही गुरु माना जाता है। पारमेश्वर अनुग्रह से सम्पन्न हो जाता है। इस प्रकार शक्तिपात से स्वयं शक्तिमन्तवत् गुरुत्व का अधिकारी पुरुष सिद्धि प्राप्त करे, इस बात पर तो आस्था की जा सकती है किन्तु अन्य शास्त्ररत और उक्त प्रकार के अभिषेक से वंचित वैष्णवादि मतवादी साधकों का इस शक्तिपात-पवित्रता से कोई सम्बन्ध नहीं होता।

एतदेवोपपादयति

**समय्यादिक्रमाल्लब्धाभिषेको हि गुरुर्मतः ।**
**स च शक्तिवशादित्थं वैष्णवादिषु कोऽन्वयः ॥ ३०८ ॥**

इत्थमिति काकाक्षिवत्, तेन पारमेश्वराच्छक्तिपातादित्थं समय्यादिक्रमेण लब्धाभिषेक इत्यर्थः । इत्थमुक्तेन प्रकारेणान्यशास्त्ररतेषु वैष्णवादिषु इह गुरुत्वे को नामान्वयो न कश्चिदभिसम्बन्धः, नहि तेषामुक्त्या पारमेश्वरशक्तिपात एवास्ति,—इति का कथा समय्यादिक्रमेण शास्त्रश्रवणाभिषेकादावित्याशयः ॥

ननु किं नामायमत्र दाम्भिकतया कृत्रिमभक्त्यादिप्रदर्शनादासादितैवंरूपो गुरुः स्यादित्याशङ्क्याह

**छद्मापश्रवणाद्यैस्तु तज्ज्ञानं गृह्णतो भवेत् ।**
**प्रायश्चित्तमतस्तादृगधिकार्यत्र किं भवेत् ॥ ३०९ ॥**

नन्वयमन्यशास्त्ररतो गुरुश्छद्मादिना वा शैवं शास्त्रं गृह्णातु, प्रायश्चित्ती वा भवतु किमनया नश्चिन्तया, शिष्यं तावदनुगृह्णात्येवेत्याशङ्क्याह

---

श्लोक का इत्थं शब्द काकाक्षिन्याय से दोनों ओर लगता है । इस प्रकार पारमेश्वर कृपा से और इस प्रकार शक्ति सम्पन्न एवम् अभिषिक्त होकर गुरु बनता है, वही नियमानुसार उचित गुरु है ॥ ३०८ ॥

प्रश्न कर्ता पूछता है कि बहुत से दाम्भिक और आडम्बरी प्रदर्शन मात्र निपुण साधु भी कृत्रिम भक्ति आदि के प्रदर्शन द्वारा ऐसे बने बनाये स्वयंभू सिद्ध दीख पड़ते हैं । ऐसे लोगों से क्या व्यवहार करना चाहिये । यही कह रहे हैं—

ऐसे छद्म का आश्रय लेने वाले लोग गुरु न हो कर मात्र दाम्भिक होते हैं । इनसे जो ज्ञान ग्रहण करते हैं, उन्हें और उसे भी प्रायश्चित करना पड़ता है । ऐसे साधु-समाज-वंचक और सीधे सादे लोगों को ठगने वाले गुरुओं से सावधान रहना चाहिये । इस सिद्धिप्रद पवित्र त्रिकमार्ग से उन लोगों को क्या लेना देना ॥ ३०९ ॥

**फलाकाङ्क्षायुतः शिष्यस्तदेकायत्तसिद्धिकः ।**
**ध्रुवं पच्येत नरके पायश्चित्त्युपसेवनात् ॥ ३१० ॥**

शिष्यस्तावत्फलं किंचिदाकाङ्क्षते, तच्च गुर्वायत्तमित्यसद्गुरुप्राप्त्यास्य तत्सिद्धिर्मा भूत्प्रत्युत

'..................तत्संपर्की तु पञ्चमः ।'

इत्युक्त्या प्रायश्चित्तिगुरूपसेवनाद्ध्रुवमसौ नरके पच्यते महानस्यानर्थः स्यादित्यर्थः । तदुक्तं

**'यदा जानन्ति नो तत्त्वं छद्मादगृह्णन्ति कौलिकम् ।**
**महापातकिनो येन नरकं गन्तुकामिनः ॥'**

---

मान लीजिये एक व्यक्ति अन्य शास्त्ररत है। छद्म से हो सही, शिव शास्त्र को ग्रहण कर लेता है । भले ही वह प्रायश्चित्तो भी हो, इसमें त्रिक मतावलम्बो को क्यों चिन्ता होनो चाहिये । वह अपने शिष्य को तो अनुगृहोत करता हो है । इस पर कह रहे हैं कि,

ऐसा फलाकाङ्क्षो शिष्य ऐसे दाम्भिक के अनुशासन में रहकर उससे प्राप्त ज्ञान से अपने को सिद्ध मानने वाला, प्रायश्चित्ती गुरु के उपसेवन रूप पाप के फलस्वरूप नरकगामी भो होता है । यह ध्रुव सत्य है ।

शिष्य यदि फलाकाङ्क्षी है, तो भोगेच्छु शिष्य होगा । भोगेच्छु शिष्य की सिद्धि गुरु के अधिकार में होतो है। यदि असद्गुरु से वह ज्ञान ग्रहण करता है, तो वह महान् अनर्थ का भागो होता है । यह उसके लिये दुर्भाग्य का विषय है। कहा गया है कि,

"ऐसे 'गुरु' के सम्पर्क में आने वाला हो पञ्चम (वर्ण) है अर्थात् चाण्डाल है"।

इस प्रकार के शास्त्रोय वाक्यों के आधार पर यह कहा जा सकता है कि प्रायश्चित्तो गुरु के उपसेवन से ध्रुव रूप से शिष्य नरक भोग प्राप्त करता है। इस शिष्य के जोवन का यह एक भारी अनर्थ ही माना जा सकता है। कहा गया है कि,

"जब वे स्वयं तत्त्व से अनभिज्ञ हैं और धूर्तता से कौलिक सिद्धिप्रद

इत्युपक्रम्य

'महार्थं भैरवोक्तं वै ज्ञानविज्ञानभाण्डकम् ।
स्वयं गृहीत्वा त्वाचारं दीक्षानुग्रहकारिणः ।
विक्रीणन्त्यात्मभोगार्थं पशूनामीदृशात्मनाम् ।
ते पतन्ति महाघोरे नरके तैः समं ततः ॥
सपुत्रमित्रभृत्याश्च यावत्सप्तकुलैः सह ।
न शक्नुवन्ति वै तेषां प्रायश्चित्तानि शुद्धये ॥' इति ॥ ३१० ॥

नन्वस्य गुरौ देवे च शक्तिपातलिङ्गं भक्तिर्दृश्यते इति शिवेनैवासौ तथा नियुक्तः, तदस्य को दोषो येनैवं स्यादित्याशङ्क्याह

---

ज्ञान को अवगम कर ही लेते हैं, तो ऐसे लोगों को महापातकी ही माना जा सकता है। वास्तव में वे नरक जाने के लिये तैयार अभागे लोग हो होते हैं।"

इससे यह सिद्ध होता है कि शुद्ध साध्य के लिये शुद्ध साधन की आवश्यकता होतो है। भला ज्ञान पाने में छद्म का आश्रय ! पुण्य प्राप्त करने के लिये पापाचार ! यह नितान्त अनुचित है। इसी सन्दर्भ को और आगे उपक्रान्त किया गया है—

"भैरव द्वारा उक्त 'महार्थ' मतवाद ज्ञान और विज्ञान का बहुत बड़ा भाण्डागार है। ऐसे स्वर्ण-पात्र की जो चोरी कर लेता है (बिना किसी को कुछ कहे स्वयं आचार ग्रहण करता है) फिर स्वयं दीक्षा भी देने लगता है, ऐसे लोग चोर व्यापारी के समान हैं, जो चोरी का माल पाकर उससे दूसरों को खरीदने का अनाचार करता है। अपने सुखभोग के लिये पशुओं की खरीद करता है। फलस्वरूप स्वयं तो महाघोर नरक में गिरता हो है, शिष्य को भो ले डूबता है। उसको आने वालो सात पोढ़ियाँ भो इस घोरतम नरक भोग से नहीं बच सकतीं। इस कुकर्म का कोई प्रायश्चित है ही नहीं" ॥ ३१० ॥

ऐसे गुरु से दीक्षा प्राप्त करने वाले उस व्यक्ति का क्या दोष है कि उसे ऐसे अभिशाप का सामना करना पड़ता है। जिज्ञासु उसके सम्बन्ध में यह जानना चाहता है कि, उसमें गुरु भक्ति भी है और जिस पन्थ में वह है, उसके देव में श्रद्धा और आस्था के लक्षण भी उसमें स्पष्ट परिलक्षित होते हैं। दूसरी बात यह भी कही जा सकतो है कि भगवान् शिव द्वारा हो वह उस कार्य में नियुक्त है। इस पर कह रहे हैं कि,

**तिरोभावप्रकारोऽयं यत्तादृशि नियोजितः ।**
**गुरौ शिवे न तद्भक्तिः शक्तिपातोऽस्य नोच्यते ॥ ३११ ॥**

अनेन चानपेक्षत्वसिद्ध्यनन्तरमनुजोद्देशोद्दिष्टं तिरोभावविचित्रत्वमप्युपक्रान्तम् ॥ ३११ ॥

ननु भवेत्त्वेवं, यस्मात्पुनरनेन च्छद्मापश्रवणादिना ज्ञानमाहृतं, तेन गुरुणा किं कार्यमित्याशङ्क्याह

**यदातु वैचित्र्यवशाज्जानीयात्तस्य तादृशम् ।**
**विपरीतप्रवृत्तत्वं ज्ञानं तस्मादुपाहरेत् ॥ ३१२ ॥**
**तं च त्यजेत्पापवृत्तिं भवेत्तु ज्ञानतत्परः ।**

---

तिरोभाव का यह प्रकार जो उसमें नियोजित है, यह न तो गुरु में न देव में और न शिव में हो उसको भक्ति का प्रमाण है। इसे शक्तिपात भी नहीं कहा जा सकता।

इस प्रसङ्ग में तिरोभाव शब्द तिरोधान रूप चतुर्थ कृत्य वाची नहीं है। यह बहुत कुछ 'ये के चात्महनो जनाः' के आत्महन्ता अर्थ के समीप का हो अर्थ व्यक्त करता है। ऐसो स्थिति में गुरु, देव और आचार्य में भक्ति का कोई प्रश्न हो नहीं उठता। न हो इसे शक्तिपात की संज्ञा दो जा सकतो है।

तिरोभाव के इस प्रकरण में अनुज उद्देश का निर्देश भो किया गया है। श्रोत० प्रथम भाग, के प्रथम आह्निक के श्लोक संख्या २९९ में अनपेक्षत्व सिद्धि के बाद का प्रकरण यहाँ प्रयुक्त है। उसो अनुज उद्देश को यहाँ उद्दिष्ट किया गया है॥ ३११ ॥

ऐसे शिष्य ने छद्म रूप से गुरुत्व का भी अपमान करने वाले गुरु से ज्ञान ग्रहण किया। इस कार्य से छद्म के आश्रय का दोष तो उस पर आया हो। फिर भी इस दिशा में यदि कुछ चेतना शिष्य में आवे, तो वह उस गुरु से कैसा बर्त्ताव करे ? इस पर कह रहे हैं कि,

यदि संयोगवश शैवो संविद् की प्रेरणा और उसके सर्जन सत्व के वैचित्र्य से उसे कुछ उद्बोध हो और वह उसे गुरु के वास्तविक उस रूप को कुछ भो जानकारो हो जाय जो उसने विपरोत प्रवृत्ति से अर्जित की है, तो

यदेति कालान्तरे, प्रथममेव हि तथात्वे ज्ञानदानमेव न भवेदिति भावः। वैचित्र्यं नानाप्रकारं व्यापारव्याहारादि। उपाहरेदिति ज्ञानाहृतिलक्षणया वक्ष्यमाणया युक्त्या। त्यजेदिति तत्सहवासादि न कुर्यादित्यर्थः, अत्र हेतुः पापवृत्तिमिति। एवमपि कृत्वा प्रायश्चित्तं विदध्यादित्युक्तं भवेत्तु ज्ञानतत्पर इति ॥

तदेव दृष्टान्तोपदर्शनेन हृदयङ्गमयति

**यथा चौराद्गृहीत्वार्थं तं निगृह्णाति भूपतिः ॥ ३१३ ॥**

**वैष्णवादेस्तथा शैवं ज्ञानमाहृत्य सन्मतिः ।**

निग्रहं कुर्यादिति शेषः। सचात्र त्यागाद्यात्मा इत्युक्तप्रायम् ॥

---

उससे मिले ज्ञान को उपाहृत कर दे। जो उससे मिला, उसे उसी को समर्पित कर दे। यह उसका प्रमुख कर्त्तव्य है। दूसरे वह उसका सर्वथा परित्याग कर दे। तीसरे उस पापवृत्ति को छोड़ दे और सत्य ज्ञान को पाने में लग जाय।

श्लोक में प्रयुक्त वैचित्र्य शब्द से यहाँ यह अर्थ भी लिया जाता है कि प्रदर्शक छद्म गुरु के नाना प्रकार के ऐसे व्यवहार और व्यापार हो सकते हैं, जो उसकी पोल खोलने के लिये पर्याप्त हों। इस वैचित्र्य बोध के बाद ऐसे गुरु से सम्बन्ध रखना समय को व्यर्थ गँवाना समझ कर उसका सर्वथा परित्याग कर देना चाहिये। शास्त्र के अनुसार ऐसे लोगों का सहचार सर्वथा वर्जित है।

ऐसे शिष्य के समक्ष एक नयी समस्या आ खड़ी होती है। अब वह क्या करे ? अब तक का उसका समय बेकार गया। चला था सोना कमाने, उसे कोयला मिला। कोयले की कालिख मिली। इस कालिख को मिटाना ही उसका अब पहला काम हो जाता है। इसी अर्थ को ऊपर प्रयुक्त 'ज्ञान तत्परः भवेत्' इस वाक्य द्वारा स्पष्ट किया गया है। अच्छे गुरु का सेवन, इस सम्बन्ध में तत्परता आदि का तात्पर्य प्रायश्चित्त आदि भी है। जिस प्रकार से स्वात्म संविद्-बोध का प्रकाश उसे मिले, उसी में उसको संलग्न हो जाना चाहिये ॥ ३१२ ॥

इन्हीं तथ्यों को दृष्टान्त के माध्यम से हृदयंगम कराने के लिये प्रस्तुत कारिका की अवतारणा की जा रही है—

नन्वस्य प्रथमं निर्विकारमेव प्रसन्नचेतसा गुरुणा ज्ञानमुपदिष्टं, तावतैव चास्य

'यस्मिन्काले तु गुरुणा निर्विकल्पं प्रकाशितम्।
तदैव किल मुक्तोऽसौ............................... ॥'

इत्याद्युक्त्या कृतकृत्यत्वमिति किमेवं पुनरायातमित्याशङ्क्याह

**स हि भेदैकवृत्तित्वं शिवज्ञाने श्रुतेऽप्यलम् ॥ ३१४ ॥**
**नोज्झतीति दृढं वामाधिष्ठितस्तत्पशूत्तमः।**
**शिवेनैव तिरोभाव्य स्थापितो नियतेर्बलात् ॥ ३१५ ॥**
**कथङ्कारं पतिपदं प्रयातु परतन्त्रितः।**

---

जिस तरह चोरी करते रंगे हाथ पकड़े गये चोर से चोरी का धन उससे लेकर राजा अपने अधिकार में ले लेता है, वैष्णवादि मतवादियों से शास्त्रों द्वारा प्रकाशित शैव ज्ञान लेकर सम्यक् प्रतिभाशाली पुरुष उसी तरह आत्मसात् कर लेता है। भूपति और सन्मति के निग्रह व्यापार समान स्तरीय होते है॥ ३१३ ॥

जिज्ञासु पूछता है कि जिस समय शिष्य गुरु के समीप जाता है, प्रसन्न चित्त गुरु उसे पहले निर्विकार भाव से ज्ञान का उपदेश करता है। उतने से ही उसका कल्याण हो जाता है।

"जिस समय गुरु द्वारा निर्विकल्प प्रकाशित होता है, उसी समय मोक्ष हो जाता है"।

इस उक्ति के अनुसार उसी समय शिष्य की कृतार्थता सम्पन्न हो जाती है। पर उससे सम्बन्धित शिष्य के तिरोधानात्मक अभिशाप का क्या परिणाम हो सकता है ?

इस पर कह रहे हैं कि,

यदि वह शिष्य शिवज्ञान के सुनने के बाद भी भेद पर आधारित अपनी वृत्तियों तथा वृत्तियों से प्रभावित कदाचार का परित्याग नहीं कर पाता, तो दृढ़ रूपों से वामपथ में अधिष्ठित उस पुरुष को पशुओं में श्रेष्ठ पशु ही कहा जा सकता है।

नोज्झतीति तत्रानाश्वस्तत्वात् तदिदं दृढं वामाधिष्ठितत्वात् । परतन्त्रित इति नियतेर्बलात् । तदुक्तं

'वैष्णवा सौगताः श्रौतास्तथा श्रुत्यन्तवादिनः ।
इत्यादयो नाधिकृता जातुचित्पतिशासने ॥' इति ॥

अत एवागमोऽप्येवमित्याह

**स्वच्छन्दशास्त्रे प्रोक्तं च वैष्णवादिषु ये रताः ॥ ३१६ ॥**
**भ्रमयत्येव तान्माया ह्यमोक्षे मोक्षलिप्सया ।**

ननु भ्रमयतु नाम माया वैष्णवादीन्, यस्तु वैष्णवादिः सन्नपि शैवस्तस्य किमायातमित्याशङ्क्याह

---

शिव से नियोजित नियति द्वारा नियुक्त वह स्वात्म संवित्-वपुष् परमेश्वर के ज्ञान से वंचित तिरोधान के अभिशाप से अभिशप्त ही रह जाता है। श्लोक के माध्यम से यह स्पष्ट कर रहे हैं कि परतन्त्र से पीड़ित वह पशु अपने मूल प्रभु रूप की प्राप्ति में असमर्थ रह जाता है।

भेदैकवृत्ति का परित्याग वह इसलिये नहीं कर पाता, कि उसे शिवज्ञान के प्रति अभी भरोसा ही नहीं रहता। उसकी मूढ़ता का कारण भी यही है। वामपन्थ में ही उसके जीवन की इति श्री हो जाती है। उसी को दृढ़ता के साथ वह पकड़े रह जाता है। कहा गया है कि,

"वैष्णव, सौगत, श्रौत और वेदान्त मतानुयायी विवर्त्तवादी विज्ञ ये सभी के सभी पतिज्ञान के राजमार्ग पर चलने का अधिकार भी प्राप्त नहीं कर पाते ॥ ३१४–३१५ ॥

आगमिक प्रामाण्य के आधार पर इसकी पुष्टि कर रहे हैं—

स्वच्छन्द शास्त्र में यह कहा गया है कि वैष्णवादि मान्यताओं में जो भी रत हैं, उन्हें अमोक्ष में मोक्ष की लिप्सा के ( बहाने ) माया भ्रम में ही पाल रही है ॥ ३१६ ॥

वैष्णव मत विष्णु को मुख्य आराध्य मानता है। इसी तरह अन्य सारे मतवाद विभिन्न देववाद के समर्थक हैं। इन भेदवादियों को माया स्वयम् भ्रम में रखे, कोई बात नहीं, पर उस वैष्णव का क्या होगा, जो वैष्णव होते हुए भी शैव ज्ञान सम्पन्न है ? इस पर कह रहे है कि,

**वैष्णवादिः शैवशास्त्रं मेलयन्निशासने ॥ ३१७ ॥**

**ध्रुवं संशयमापन्न उभयभ्रष्टतां व्रजेत् ।**

मेलयन्निति उभयत्रापि अनाश्वासात् ॥

ननु एवमपि उभयभ्रष्टतायां को हेतुरित्याशङ्क्याह

**स्वदृष्टौ परदृष्टौ च समयोल्लङ्घनादसौ ॥ ३१८ ॥**

**प्रत्यवायं यतोऽभ्येति चरेत्तन्नेदृशं क्रमम् ।**

तदुक्तम्

'अथ वेदाश्रितः शैवं पुनरेव समीहते ।
वेदनष्टः शैवनष्टः पुनरेव भविष्यति ॥
सन्ध्यादिवन्दनं कार्यं यदि वैदिकदर्शने ।
लोपश्च शिवमन्त्राणां प्रायश्चित्तं विधीयते ॥

---

वैष्णवादि मतवादी अपने अनुशासन में यदि शैवज्ञानानुशासन का मेलन करता है, तो यह निश्चय है कि उभयात्मक संशय से वह ग्रस्त है। परिणाम स्वरूप वह इतोऽपिभ्रष्टः उतोऽपिभ्रष्टः की कहावत चरितार्थ करता है ॥ ३१७ ॥

मतवादों में विभिन्न दृष्टियों की प्रमुखता से ही भेदवाद की सृष्टि होती है। 'अपनी अपनी डफली, अपना अपना राग, संगीत के सामरस्यमय आस्वाद का बाधक ही होता है। उसी तरह वैष्णवादिकों की दूषित दृष्टि और शैवज्ञान की सम्यक् दृष्टि के मेलन से आचार और समयानुशासन का उल्लङ्घन होता है। इसके फलस्वरूप वह जीवन में विभिन्न विघ्नों से आघात प्राप्त करता है। अतः ऐसा कभी नहीं करना चाहिये। कहा भी गया है कि,

"वेद पर आश्रित उपासक यदि शैव उपासना पसन्द करता है, तो वह वेदवाद से भी भ्रष्ट होता है और शैवदृष्टि से भी भ्रष्ट होता है। उसका भविष्यत् भी भ्रष्ट हो जाता है"।

वैदिक मतवाद में सन्ध्यादि अनिवार्य करणीय कार्य हैं उन्हें मानकर उन मन्त्रों के जपादि उपयोग में परायण उपासक शिव मन्त्रों का उपयोग कैसे करेगा ? इस तरह शिव मन्त्रों का दुरुपयोग स्वाभाविक है। इसका प्रायश्चित्त होता है।

शिवधर्मो ह्यथादौ चेद्वेदधर्मो विलुप्यते ।
समेत्य वाप्यनुष्ठाने आदिमध्यान्तदूषणम् ॥
प्रतिपत्तिविरोधश्च विचित्तत्वं प्रपद्यते ।
कस्यारम्भः किमग्रेऽन्ते किं कृत्यं विचिकित्सया ॥
आदौ किं च करिष्यामि द्वाभ्यामादरशासनात् ।
श्रद्धानाशे भक्तिनाशः किं कथं च भविष्यति ।
क्रियाक्रमविरोधेऽपि प्रायश्चित्तं परस्परम् ॥' इति ॥

न केवलमेतत्स्वच्छन्दशास्त्रे एवोक्तं, यावदन्यत्रापीत्याह

**उक्तं श्रीमद्गह्वरे च परमेशेन तादृशम् ॥ ३१९ ॥**

---

यदि पहले शिव धर्म का पालन करता है और फिर वेद धर्म अपनाता है या दोनों को साथ-साथ ले चलने का प्रयास करता है, तो इससे भी आदि मध्यान्त दूषण से ग्रस्त हो जाता है ।

यह स्वाभाविक है कि दो वस्तुओं में आपसी प्रतियोगिता हो अथवा विरोध हो । वैष्णव प्रतिपत्ति और शैव प्रतिपत्ति का भी पारस्परिक विरोध है । इससे विचिकित्सा उत्पन्न होती है, जो उपासना के लिये जहर का काम करती है । शिष्य के सामने यह प्रश्न सदा उठता रहता है कि पहले किसे शुरू करें, उसे करें, इसे करें या मिलाकर करें या न करें, क्या करें ? इस परीशानी में वह अवश्य पड़ जाता है ।

आदर तो दोनों में है । उसके मन में यह बात घर कर गयी होती है कि, शैव दृष्टि भी अच्छी, वैष्णव आदि की दृष्टि भी अच्छी । इससे प्राधान्य सम्बन्धी विचिकित्सा उत्पन्न होती है । श्रद्धा का नाश हो जाता है । भक्ति मर जाती है । क्या क्या अनर्थ नहीं होता ? क्रिया में और क्रम में जब विरोध उत्पन्न हो जाता है, तो निश्चित ही प्रायश्चित करना पड़ता है" ॥ ३१८ ॥

परमेश्वर शिव ने श्रीमद् गह्वर नामक शास्त्र में स्वयं कहा है कि, अन्यान्य शास्त्रों से अभितः योजित साधकों में शैव ज्ञान प्रकाशित ही नहीं (होता) अभियुक्त वह पुरुष होता है, जो शास्त्रीय मान्यताओं से प्रत्यक्षतः जुटा हुआ होता है । यहाँ लोग अन्यान्य शास्त्रीय मार्गों के पालन में अनवरत लगे हुए

तदेव पठति

**नान्यशास्त्राभियुक्तेषु शिवज्ञानं प्रकाशते ।**

न प्रकाशते इति तत्राधिकारिणस्ते न भवन्तीत्यर्थः ॥

तदेव विभज्य दर्शयति

**तत्र सैद्धान्तिको वामे नासौ दक्षे स नो मते ॥ ३२० ॥**
**कुले कौले त्रिके नासौ पूर्वः पूर्वः परत्र तु ।**

अधिकारी न भवेदिति संबन्धः अयं पुनरत्र विशेषो यत्पूर्व पूर्वः परत्र सर्वत्राधिकारी भवेदित्युक्तं पूर्वः पूर्वः परत्र त्विति ॥

ननु समानेऽप्यन्यशास्त्राभियुक्तत्वे पूर्वः पूर्वः परत्र चेदधिकारी, तत्परः परः पूर्वत्र कस्मान्नेत्याशङ्क्याह

**अवच्छिन्नोऽनवच्छेदं नो वेत्यानन्त्यसंस्थितः ॥ ३२१ ॥**
**सर्वसहस्ततोऽधःस्थ ऊर्ध्वस्थोऽधिकृतो गुरुः ।**

---

हैं। यह ठीक नहीं। शैव ज्ञान के प्रकाश का तात्पर्य है कि वह इसका अधिकारी है, जिसमें यह ज्ञान प्रकाशमान हो रहा है। जो इसका अधिकारी नहीं होता, उसमें इस ज्ञान का प्रकाश नहीं होता ॥ ३१९ ॥

जैसे सैद्धान्तिक ज्ञान वाम में नहीं होता। वामतन्त्र का ज्ञान दक्षिणतन्त्र में नहीं होता। दक्ष का ज्ञान 'मत' सन्तति में सम्भव नहीं है। मत का कुल में, कुल का कौल में और कौल का ज्ञान त्रिक मे नहीं होता। इनमें पहले वाला पिछले ज्ञान को प्राप्त करने का अधिकारी होता है। जैसे 'सिद्धान्त' शास्त्र को जानकर वाम तन्त्रों का ज्ञान आत्मसात् करने का अधिकारी होता है। यही क्रम त्रिक तक चलता है। इसलिये त्रिक तन्त्र को सर्वोत्कृष्ट मानते हैं ॥ ३२० ॥

प्रश्न है कि सभी शास्त्रों के अभियुक्त विद्वान् समान रूप से अपने शास्त्रानुमोदित मार्ग का अनुसरण करते हैं। साथ ही साथ पहले वाले उत्तर वर्णित शास्त्रज्ञान के यदि अधिकारी होते हैं, तो परत्र वाले पूर्व पूर्व के अधिकारी क्यों नहीं माने जाते ? इस पर कह रहे हैं कि,

इहोपाधीनां नानात्वादानन्त्यसंस्थितोऽवच्छिन्नः संकुचितः प्रमातानवच्छेदमविद्यमानावच्छेदमनवच्छिन्नं पूर्णं प्रमातारं नो वेत्ति तदात्मतया न भायात् । ततोऽनवच्छिन्नत्वात्सर्वंसह ऊर्ध्वस्थ एव गुरुरधःस्थे प्रतिनियते वैष्णवादावधिकृतो, नत्वधःस्थ ऊर्ध्वस्थे । स हि संकुचितज्ञान इति कथं पूर्णज्ञानावगाहनपात्रतामियात् ॥

नन्वेवमूर्ध्वस्थोऽपि पूर्णज्ञानो गुरुरधःस्थे वैष्णवादौ कथंकारमधिकारं कुर्यादित्याशङ्क्याह

**स्वात्मीयाधरसंस्पर्शात्प्राणयन्नधराः क्रिया ॥ ३२२ ॥**
**सफलीकुरुते यत्तदूर्ध्वस्थो गुरुरुत्तमः ।**

---

अवच्छिन्न अर्थात् संकुचित या खण्डित शास्त्र की साधना करने वाला अनवच्छेद अर्थात् अखण्ड, पूर्ण या असंकुचित ज्ञान का अधिकारी नहीं हो सकता । कारण यह है कि वैष्णव आदि वर्ग अनन्त अनन्त उपाधियों से खण्डित संकुचित शास्त्र का ज्ञान रखता है । इसीलिये उसे अधःस्थ मानते हैं । इससे ऊँचा ऊर्ध्वस्थ होता है । वही सर्वंसह माना जाता है । वही अधःस्थ का अधिकारी गुरु होता है ।

संकुचित प्रमेयों का जानकार संकुचित प्रमाता ही कहलाता है । वह उस प्रमाता को कैसे जान सकता है, जिसमें किसी प्रकार का अवच्छेद विद्यमान ही नहीं । जितने वैष्णव आदि साधक है, वे प्रतिनियत खण्डित विषयों के ही अधिकारी होते हैं । इसीलिये उन्हें अधःस्थ मानते हैं । यह स्वाभाविक है कि अधःस्थ ऊर्ध्वस्थ का अधिकारी नहीं हो सकता । अतः सब कुछ आत्मसात् करने में समर्थ ऊर्ध्वस्थ ही अधिकृत गुरु है, यह बात सर्वमान्य है ॥ ३२१ ॥

यह ध्रुव सत्य है कि ऊर्ध्वस्थ गुरु ही उत्तम गुरु होता है । ऊर्ध्वस्थ गुरुवर्य पूर्णज्ञानवान् होता है । वह अधःस्थ वैष्णव आदिकों पर कैसे अधिकार कर सकता है ? इस पर कह रहे हैं कि,

ऊर्ध्वस्थ गुरु अपनी प्राणवत्ता से स्वात्मीय अधर संस्पर्श के माध्यम से सारी अधरस्थ क्रियाओं में प्राण का संचार करता हुआ उन्हें सफल बना देता है । यही कारण है कि ऊर्ध्वस्थ गुरु उत्तम कोटि का माना जाता है ।

यदूर्ध्वस्थो गुरुः स्वात्मसाक्षात्कारात् संपूर्णाद्वयज्ञानपरामृतसंपाताद-धराः क्रियाः प्राणयंस्तदनुप्राणिताः संपादयन् परिपूर्णभुक्तिमुक्तिप्रदतया सफलयति, तदसावुत्तमः सर्वातिशायीत्यर्थः ॥

नन्वेवंविधोऽप्यूर्ध्वस्थो गुरुरधःस्थे वैष्णावादौ किं कुर्यात्, नह्यसावेतद-नुग्रहस्य पात्रमित्याशङ्क्याह

**अधःस्थदृक्स्थोऽप्येतादृग्गुरुसेवी भवेत्स यः ॥ ३२३ ॥**
**तादृक्शक्तिनिपातेद्धो यो द्रागूर्ध्वमिमं नयेत् ।**

---

इस कारिका में एक अत्यन्त ऊँची साधना विधि की ओर संकेत किया गया है। प्राण वाह और अपानवाह को साधना से आमावस्य और पौर्णमास केन्द्र पर साधक या सांसिद्धिक गुरु अधिकार पा लेता है। यह प्राण सिद्ध गुरु किसी सम्प्रदाय के मतवादी के सम्पर्क में आने पर उसके कल्याण की कामना से स्वतः या प्रार्थना करने पर स्वयं अपनी उसी प्राण शक्ति को अधरस्थ प्राण प्रवाह में संचालित कर देता है। परा संविद् को स्वात्म संविद् प्रवाह में पिरोकर ऊर्ध्वस्थ गुरु परामृत का पान कर चुका होता है। उसी प्राण शक्ति द्वारा परामृत तत्त्व को अन्य मतवादी के प्राण वाह में डाल देने से उसकी प्राण शक्ति जो सोई पड़ी थी, उसमें उल्लास की लहर दौड़ पड़ती है। वह गुरु-प्राणामृत से तुरत उसी क्षण अनुप्राणित हो उठती है।

इतनी विधि के सम्पादित कर लेने पर ऊर्ध्वस्थ गुरु उस अधःस्थ की अधर क्रियाओं को भी बल प्रदान करता है। वह अपना ही हो चुका होता है। उसे भुक्ति और मुक्ति दोनों के उपभोग में समर्थ बना देता है। उसकी उत्तमता का यह प्रमाण है। अपनी साधना के बल पर गुरु के लिये ऐसा करना सरल होता है। यद्यपि इसमें साधना में कमी आने का भय रहता है। पर गुरु सिद्धसाधक होता है। उसका अनवरत अद्वय-पीयूष का पान करना इस कमी को पूरा कर देता है ॥ ३२२ ॥

वास्तव में ऊर्ध्वस्थ गुरु के अनुग्रह का अधःस्थ गुरु पात्र तो नहीं होता। पर ऊर्ध्वस्थ गुरु अपने आप यह समझने की शक्ति तो रखता ही है कि, यदि अधःस्थ गुरु के ज्ञान को एक दिशा दे दी जाय, तो इसका कल्याण हो सकता है। इसलिये वह जो कुछ करता है, उसी का उल्लेख यहाँ कर रहे हैं—

यो ह्यधस्तनदर्शनस्थोऽपि वैष्णवादिः, स तादृशा मध्यत्तीव्रप्रायेण शक्तिपातेन इद्धः सन्नेतादृशमूर्ध्वस्थं गुरुं सेवमानो भवेत्, य इममधःस्थदृक्स्थमपि वैष्णवादिकं शीघ्रमेवोर्ध्वं नयेत् परसंविदैकात्म्येनावभासयेदित्यर्थः ॥

ननु यथा पूर्वः पूर्वः परत्राधिकारी, तथा परः परः पूर्वत्रापि कस्मान्नेत्याशङ्कां दृष्टान्तोपदर्शनेन प्रशमयति

**तत्तद्गिरिनदीप्रायावच्छिन्ने क्षेत्रपीठके ॥ ३२४ ॥**
**उत्तरोत्तरविज्ञाने नाधिकार्यधरोऽधरः ।**

इह यथा तैस्तैर्गिरिनदीप्रायैर्निम्नोन्नतैर्भूमिभागैरवच्छेदमीयुष्यूर्ध्वोर्ध्वे कोट्टप्राये क्षेत्रसंस्थानादावधरो निम्ननिम्नदेशस्थो नाधिकारी, तथाधोऽधःस्थितो वैष्णवादिरुत्तरोत्तरे शैवादौ विज्ञानेऽपीति वाक्यार्थः ॥

---

अधःस्थ गुरु का या परमतरत व्यक्ति के ज्ञान का एक सीमित परिवेश होता है। ऊर्ध्वस्थ गुरु द्वारा अनुप्राणित होने पर वह अधःस्थ कुछ परिष्कृत ज्ञानवान् हो जाता है। परिणामतः वह अपने मतवाद के दुराग्रह का परित्याग कर ऊर्ध्वस्थ गुरु को सेवा के लिये तत्पर हो जाता है। प्राणशक्ति के सम्पात से उसकी मेधा समृद्ध हो जाती है। वह आगे ऊर्ध्व परिवेश में पहुँचाने लायक हो जाता है। ऊर्ध्वस्थ गुरु ऐसा जान कर उसे अपने संविदद्वय के ऐकात्म्य रूपी अमृत से अभिषिक्त कर ऊपर उठा लेता है।

ऊर्ध्वस्थ गुरु शक्ति संपात में समर्थ होता है। यह शक्तिपात मध्य तीव्र प्रकार का होता है। उससे अधःस्थ मतवादी की प्रतिभा उद्दीप्त हो उठती है। अब उसमें गुरु सेवा के संस्कार भी जग पड़ते हैं। 'नयेत्' क्रिया में विधि लिङ् का प्रयोग कर यह निर्देश भी शास्त्रकार दे रहे हैं कि ऊर्ध्वस्थ गुरु अपनी साधना विधि का प्रयोग कर अधःस्थ का उद्धार कर ले, जिससे अपनी ही तरह उसे भी परसंविद्साक्षात्कार का सौभाग्य मिल सके ॥ ३२३ ॥

प्रश्नकर्त्ता पूछता है कि पूर्व-पूर्व मतवादी जैसे परत्र-परत्र का अधिकारी होता है, वैसे ही परत्र वाले पूर्व के अधिकारी क्यों नहीं बन पाते, इस प्रश्न का समाधान दृष्टान्त के माध्यम से कर रहे हैं—

जैसे पहाड़ों और नदियों से घिरे क्षेत्रीय पीठ पर स्थित घुमावदार रास्ते से जाने पर ऊपरी शिखर का सुखद स्पर्श मिलता है, वहाँ नीचे के लोग उस गढ़ प्रदेश में जाने से कतराते हैं। उनको वहाँ ले जाने में लिये मार्ग दर्शक की

न केवलमेतत्परमेवोद्दिश्योक्तं, यावत्स्वमपीत्याह

**उत्तरोत्तरमाचार्यं विदन्नप्यधरोधरः ॥ ३२५ ॥**

**कुर्वन्नधिक्रियां शास्त्रलङ्घी निग्रहभाजनम् ।**

शास्त्रलङ्घीति तदुक्तं

**'न कुर्यादधिकारं तु आचार्ये महति स्थिते ।**

**यस्तु मोहवशात्कुर्याच्छाकिन्यो वै शपन्ति तम् ॥'**

नन्वेवमस्तु शैववैष्णवादीनामाधरोत्तर्यं, शैवादीनामेव पुनः समानेऽपि पारमेश्वरे शक्तिपाते परस्परस्य किंनिमित्तमित्याशङ्क्याह

---

आवश्यकता होती है । उसी तरह उत्तरोत्तर ऊर्ध्व विज्ञान में अधःस्थ लोगों का अधिकार सम्भव नहीं । वहाँ जाने के लिये मार्ग दर्शक गुरु की आवश्यकता अनिवार्यतः होती है । शैव विज्ञान उसी प्रकार गिरि-शिखरारूढ़ विज्ञान है, जहाँ ऊर्ध्वस्थ गुरु ही ले जा सकता है ॥ ३२४ ॥

यह बात केवल दूसरों पर ही लागू नहीं होती, अपने मत में दीक्षित गुरुजनों के लिये भी उतनी ही लागू होती है । यही कह रहे हैं—

उत्तरोत्तर उत्कर्ष की सोपान परम्परा को पाकर सर्वोच्च स्थान पर पहुँचे हुए आचार्य वर्ग को जानते हुए भी अधर श्रेणी के स्तरीय साधक उन पर अपना अधिकार न जतायें । ऐसे लोग शास्त्रलङ्घी कहलाते हैं । ये लोग भी निग्रह के पात्र हैं ।

शास्त्रलङ्घी शब्द को उद्धरण द्वारा स्पष्ट कर रहे हैं—

"महत् आचार्य के स्थित रहने पर उस पर किसी प्रकार का अधिकार प्रदर्शित नहीं करना चाहिये । जो मोहमुग्ध अज्ञानी ऐसी दुश्चेष्टा करता है, योगिनी शाकिनी शक्तियाँ उसे अभिशप्त कर देती हैं" ॥ ३२५ ॥

जिज्ञासु यह जानना चाहता है कि शैव साधकों पर समान पारमेश्वर शक्तिपात होने पर भी उनमें आधरौत्तर्य भाव क्यों होता है ? शैव वैष्णव आदि में यह होना तो स्वाभाविक है पर यहाँ इस प्रकार का श्रेणी विभाजन क्यों ? इस पर कह रहे हैं कि,

**शक्तिपातबलादेव ज्ञानयोग्यविचित्रता ॥ ३२६ ॥**

तद्वैचित्र्यमेव दर्शयति

**श्रौतं चिन्तामयं द्व्यात्मभावनामयमेव च ।**
**ज्ञानं तदुत्तरं ज्यायो यतो मोक्षैककारणम् ॥ ३२७ ॥**

चिन्तामयं च ज्ञानं मन्दस्वभ्यस्तभेदभिन्नतया द्विरूपमित्याह द्व्यात्मेति ।

तदुक्तं

**ज्ञानं च त्रिविधं प्रोक्तं तत्राद्यं श्रुतमिष्यते ।**
**चिन्तामयमथान्यच्च भावनामयमेव च ॥**
**शास्त्रार्थस्य परिज्ञानं विक्षिप्तस्य श्रुतं मतम् ।**
**इदमत्रेदमत्रेति इदमत्रोपयुज्यते ॥**

---

शक्तिपात के प्रभाव से ही ज्ञान और ज्ञान सम्पन्न योग्य पुरुषों में वैचित्र्य दृष्टिगोचर होता है। वैचित्र्य का प्रकार भी अकारण नहीं है। जैसे ज्ञान को लीजिये। यह श्रौत और चिन्तामय दो प्रकार का होता है। चिन्तामय का तात्पर्य अनवरत चिन्तन योग्य होता है। चिन्ता का विषय इसलिये कि यदि इस पर ध्यान नहीं दिया गया, चिन्तन और मनन नहीं किया गया, तो यह भार बन जाता है। यह मन्द और स्वभ्यस्त भेद से दो प्रकार का होता है।

श्रौत ज्ञान का प्रथम प्रकार है। दूसरा भेद ही 'चिन्तामय' नामक है। तीसरे भेद का नाम 'भावनामय' है। इस त्रिप्रकारक ज्ञान का उत्तर अर्थात् 'भावनामय' नामक भेद ही श्रेष्ठ माना जाता है। यही मोक्ष का एक मात्र कारण होता है। कहा गया है कि

"ज्ञान तीन प्रकार के होते हैं। इसके पहले भेद को श्रौत ज्ञान कहते हैं। दूसरा चिन्तामय होता है। तीसरे ज्ञान भेद का नाम 'भावनामय' है।

विक्षिप्त अर्थात् इधर उधर बिखरे शास्त्रार्थ ज्ञान को श्रुत ज्ञान मानते हैं। यह यहाँ है, यह वहाँ है और यह विषय यहाँ है—इसका सुना-सुनाया ज्ञान ही श्रुत ज्ञान कहलाता है। वह विभिन्न सन्दर्भों में अपेक्षित होता है। अलग अलग उनका उपयोग और नियोजन होता है। सारे प्रकरण का विश्लेषण शास्त्र के अर्थ का आनुपूर्वी संयोजन और अर्थ की व्यवस्था जिसमें की जाती है, ऐसी विशेषता से विशिष्ट ज्ञान को चिन्तामय ज्ञान कहते हैं। यह दो प्रकार का होता है। पहले भेद का नाम 'मन्द' ज्ञान है।

सर्वमालोच्य शास्त्रार्थमानुपूर्व्या व्यवस्थितिः ।
तच्च चिन्तामयं ज्ञानं द्विरूपमुपदिश्यते ॥
मन्दस्वभ्यस्तभेदेन तत्र स्वभ्यस्तमुत्तमम् ।
सुनिष्पन्ने ततस्तस्मिञ्जायते भावनामयम् ॥
यतो योगं समासाद्य योगी योगफलं लभेत् ।
एवं विज्ञानभेदेन ज्ञानी प्रोक्तश्चतुर्विधः ।।' इति ।

तदुत्तरमिति तेषां श्रौतादीनां चतुर्णां ज्ञानानां मध्यादुत्तरं भावनामयमित्यर्थः ॥ ३२७ ॥

मोक्षैककारणत्वमेव विभज्य दर्शयति

**तत्त्वेभ्य उद्धृतिं क्वापि योजनं सकलेऽकले ।**
**कथं कुर्याद्विना ज्ञानं भावनामयमुत्तमम् ॥ ३२८ ॥**

---

दूसरे भेद का नाम 'स्वभ्यस्त' है। निरन्तर शास्त्रों के अभ्यास में संलग्न रह कर दक्षता प्राप्त कर लेने वाला स्वभ्यस्त ज्ञानवान् माना जाता है। उसके ज्ञान को ही स्वभ्यस्त ज्ञान कहते हैं। जब चिन्तामय स्वभ्यस्त सुनिष्पन्न हो जाता है, उसके बाद भावनामय की उत्पत्ति होती है।

भावनामय ज्ञान के उल्लसित हो जाने पर योगी योग का रहस्यदर्शी हो जाता है। इससे उसको योग फलों को उपलब्धि होने लगती है। ज्ञान के इस वैज्ञानिक भेद से यह अनुभव होता है कि ज्ञान चार प्रकार के होते हैं। १. श्रौत, २. चिन्तामय, ३. मन्द और अभ्यस्त और ४. भावनामय"। इन चारों प्रकार के ज्ञानों में भावनामय ज्ञान उत्तर ज्ञान अर्थात् सर्वश्रेष्ठ ज्ञान माना जाता है। क्योंकि मोक्ष का एक मात्र यही कारण है ॥ ३२७ ॥

उत्तर भावनामय ज्ञान मोक्ष का एक मात्र कारण किस आधार पर माना जाता है, इसका स्पष्टीकरण कर रहे हैं—

साधना के क्रम में इसका सबसे महत्त्वपूर्ण कार्य यह होता है कि, यह तत्त्वों के बन्धन से उद्धार कर देता है। कहीं योजन का काम करता है। सकल श्रेणी से अकल स्तर प्रदान करता है। विशेषतः यह विवेक जाग्रत हो जाता है कि, तत्त्वों के अशुद्ध परिवेश से ऊपर उठ कर सकल की अपनी स्थिति समझकर

तत्त्वेभ्य इत्यशुद्धेभ्यः, क्वापोति यथाभिमते, ज्ञान्यपि हि गुरुरकृततत्तत्त्व-साक्षात्कारः कथमेवं कुर्यादित्याशयः ॥ ३२८ ॥

ननु

**'द्वावेव मोक्षदौ प्रोक्तौ ज्ञानी योगी च शांकरे।'**

इत्याद्युक्त्या योगिनोऽपि मोक्षकारणत्वमुक्तं, तत्कथमिह भावनामयस्यैव ज्ञानस्य तदेककारणत्वमुच्यत इत्याशङ्क्याह

**योगी तु प्राप्ततत्तत्त्वसिद्धिरप्युत्तमे पदे।**
**सदाशिवाद्ये स्वभ्यस्तज्ञानित्वादेव योजकः ॥ ३२९ ॥**

ननु योगबलादेव योगिनस्तत्तत्त्वसिद्धिर्जायते इति तत एवासौ तेषु तेषु तत्त्वेषु शिष्यस्य योजनां विदध्यादिति किमस्यैवंविधेन ज्ञानेन प्रयोजनमित्याशङ्क्याह

---

अकल के निर्विकल्प शिखर पर आरूढ होना है। स्वयं शास्त्रकार पूछते हैं कि बिना भावनामय उत्तर ज्ञान के जागरण के कोई मोक्ष कैसे पा सकता है? अर्थात् नहीं पा सकता। यह ध्रुव सत्य है कि ज्ञानी गुरु भी तत्त्वसाक्षात्कार के अभाव में मोक्ष नहीं पा सकता ॥ ३२८ ॥

प्रश्न कर्त्ता के सामने आगम का एक वचन है। उसमें लिखा है कि,

"शाङ्कर दर्शन में दो ही मोक्ष देने वाले हैं। १—ज्ञानी और २—योगी"।

वह पूछता है कि उक्त वचन के अनुसार योगी भी मोक्ष का कारण सिद्ध होता है। ऐसी स्थिति में उत्तर ज्ञान को ही मोक्ष का एक मात्र कारण मानना कहाँ तक उचित है? इस पर कह रहे हैं कि,

यह बात सही है। प्रश्न अपने स्थान पर उचित है। यहाँ यह ध्यान देने की मुख्य बात है कि योगी तत्त्व की तात्त्विक सिद्धियों को पाकर सिद्ध हो चुका होता है, फिर भी उत्तमोत्तम सदाशिव आदि पदों पर योजित करने में स्वभ्यस्त भावनामय ज्ञान ही कारण होता है। योगी तब तक योजक नहीं माना जा सकता, जब तक ज्ञान के इस औत्तर पद पर अधिष्ठित नहीं होता ॥ ३२९ ॥

**अधरेषु च तत्त्वेषु या सिद्धिर्योगजास्य सा ।**
**विमोचनायां नोपायः स्थितापि धनदारवत् ॥ ३३० ॥**

ननु केनैवमुक्तं यदस्योर्ध्वेषु सदाशिवादितत्त्वेषु योगजा सिद्धिर्न स्यात्, यद्वशात्सर्वमपीदं जगदुन्मोचयेदित्याशङ्क्याह

**यस्तूत्पन्नसमस्ताध्वसिद्धिः स हि सदाशिवः ।**
**साक्षादेष कथं मर्त्यान्मोचयेद्गुरुतां व्रजन् ॥ ३३१ ॥**

---

योगबल से योगियों की योगसिद्धि होती है और तत्त्वसिद्धि भी होती है। इसी योगबल से योगी यथाभिमत तत्त्वों में साधक शिष्य को योजित कर सकता है। उसको इस प्रकार के ज्ञान से क्या लेना देना ? इस पर कह रहे हैं कि,

अधर तत्त्वों में योगी को योगजा सिद्धि तो होती है, पर तत्त्वों के अधर परिवेश से मुक्त कराने की उसको शक्ति नहीं होती। धन और दारा का उदाहरण यहाँ अत्यन्त उपयुक्त है। हमारे पास धन है, सबने दार परिग्रह भी किया है। पर इन से भौतिकता से छुटकारा नहीं मिल सकता। योगी के पास भी योगबल का धन है और सिद्धिरूपा दारा भी है पर वह शिष्य को भौतिक धन-दारा से विमुक्त नहीं कर सकता। इसके लिये औत्तर ज्ञान आवश्यक है ॥ ३३० ॥

योगजा सिद्धि संसार से छुटकारा दिलाने वाली शक्ति है। उसका ही स्पष्टीकरण कर रहे हैं—

जिसमें समस्त अध्वावर्ग को पार कर लेने की महती सिद्धि का महाबोध उल्लसित है, वही सदाशिव है। गुरुता के इस महत्त्वपूर्ण पद पर अधिष्ठित होकर वह अधःस्थ मर्त्यों को साक्षात् विमुक्त नहीं कर सकता।

यहाँ निष्कर्ष पर इस प्रकार पहुँचा जा सकता है। ज्ञानी के चार भेद ऊपर गिनाये गये हैं। उनमें यथोत्तर वैशिष्ट्य होता है, यह भी स्पष्ट है। योगी की तरह अभ्यास रहित होने पर भी ज्ञानी स्वात्म संविद् स्तर पर स्वभ्यस्त भावनामय विज्ञान के प्रसाद से भैरवीभाव को भी आसादित (प्राप्त) कर लेता है। इस प्रकार दीक्षा आदि प्रसङ्गों में वह योगी से भी श्रेष्ठतर सिद्ध हो जाता है। इसी आधार पर भावनामय चतुर्थ ज्ञान को ही सर्वश्रेष्ठ माना गया है।

अयमत्र पिण्डार्थः—इह ज्ञानी तावच्चतुर्विधः। तस्य यथोत्तरं वैशिष्ट्य-मित्युक्तप्रायम्। ततश्च योगिवदभ्यासरहितोऽपि ज्ञानी सर्वथा स्वभ्यस्तभावना-मयविज्ञानप्रसादासादितभैरवीभावो दीक्षादिक्रमे प्रशस्यतर इत्येवमुक्तं भावनामय-मेव ज्ञानं ज्याय इति। योगी चतुर्विधः संप्राप्तो घटमानः सिद्धयोगः सुसिद्धश्चेति। तत्र संप्राप्तः—प्राप्तयोगोपदेशमात्रो, घटमानश्च तदभ्यासमात्रनिष्ठ इत्येतौ स्वय-मेव न तथा योगे वा प्ररूढाविति परस्य किं कुरुतः। सिद्धयोगस्य पुनः स्वभ्य-स्तज्ञानमप्यस्ति,—इति तत्प्रयोजकीकारेणैवायं मोचको, नान्यथेत्युक्तं 'योगी तु स्वभ्यस्तज्ञानित्वादेव उत्तमे पदे योजकः' इति 'स्थितापि योगजास्य सिद्धिर्वि-मोचनायां नोपायः' इति च। उक्तं च

**'उत्तरोत्तरवैशिष्ट्यमेतेषां समुदाहृतम्।**
**ज्ञानिनां योगिनां चैव सिद्धयोगविदुत्तमः॥**
**यतोऽस्य ज्ञानमप्यस्ति पूर्वो योगफलोज्झितः'**। इति॥ ( मा० तं० )

---

जहाँ तक योगी की बात है—यह भी चार प्रकार का होता है। १. सम्प्राप्त, २. घटमान, ३. सिद्धयोग और ४. सुसिद्ध।

१. सम्प्राप्त—वह योगी होता है, जो योग के उपदेशों को सुनकर योग के विषय की जानकारो पा लेता है। उसमें साधना आदि का लेश भी नहीं होता।

२. घटमान – वह योगो होता है, जो उपदेश के आधार स्वयं अभ्यासरत रहकर अपने को उसमें घटित करता है। वह किसी का क्या कल्याण कर सकता है।

३. सिद्धयोग—वह योगी होता है, जिसमें योग का प्रक्रियात्मक ज्ञान भो है और स्वभ्यस्त ज्ञान भो है। इसी स्वभ्यस्त ज्ञान के कारण यह योजक श्रेणी में आता है। योगबल के आधार पर यह मोचक नहीं होता। इसोलिये पहले कहा गया है कि स्वभ्यस्त ज्ञान के प्रभाव से हो यह उत्तम और पर-योजक होता है।

इसी आधार पर यह भी कहा गया है कि इसकी योगजा सिद्धि विमुक्ति की उपाय नहीं है। कहा भी गया है कि,

सुसिद्धस्तु—

**'यः पुनर्यत्र तत्रैव संस्थितोऽपि यथा तथा।**

**भुञ्जानस्तत्फलं तेन हीयते न कथंचन॥**

**सुसिद्धः स तु बोद्धव्यः सदाशिवसमः प्रिये।'** ( मा० तं० )

इत्याद्युक्त्या सदैवास्खलितस्वरूपः शिव एव इत्यसौ गुरुतां व्रजन् विद्येशानपास्य कथं साक्षान्मोचयेन्मर्त्यान्, पारम्पर्येण तु मोचयेदेवेति तदभिधानस्येह कोऽवसर इत्यर्थः यदुक्तमनेनैवान्यत्र 'सुसिद्धस्तु शिव एवेति किं तत्रोच्यते इति। ततश्चैवं ज्ञानयोगयोर्विभागं विचार्य स्वभ्यस्तज्ञानवानेव गुरुर्मोक्षप्रद इति सर्वत्रोक्तं येनास्माभिरप्येवमिहाभिहितम्॥

---

"इनकी उत्तरोत्तर विशिष्टता विख्यात है। ज्ञानियों और योगियों में तुलनात्मक दृष्टि से देखा जाय, तो यह कहा जा सकता कि, सिद्धयोगवेत्ता ही उत्कृष्ट है क्योंकि इसमें यौगिक फलों के परित्याग के साथ ही साथ स्वभ्यस्त भावनामय ज्ञान भी होता है"।

४. सुसिद्ध—वह योगी होता है, जो जहाँ तहाँ जैसे तैसे रहते हुए भी स्वात्म में रमण करने का आनन्दोपभोग करता रहता है। इस आत्मरति से वह कभी छूटता नहीं है। वह सदा शिव के समान ही होता है। मालिनी विजयोत्तर तन्त्र की इस उक्ति से यह सिद्ध होता है कि, वह अपने स्तर से कभी स्खलित नहीं होता। वह साक्षात् सादाशिव भाव के आगे बढ़ कर मानो शिव ही हो जाता है।

इस प्रकार अपने गुरुत्व का संवर्द्धन कर विद्येश्वरादि देवों को पीछे छोड़कर भी वह मर्त्य प्राणियों को साक्षात् विमुक्ति का कारण नहीं बनता। 'परम्परा से किसी प्रकार ऐसा कर सकता है' इस कथन की भी यहाँ कोई उपयोगिता नहीं है। वह शिव रूप ही होता है।

इस प्रकार ज्ञान और योग के सन्दर्भ में योगियों और ज्ञानियों का स्तरीय विश्लेषण किया गया। निष्कर्ष यह निकला कि स्वभ्यस्त ज्ञानवान् गुरु ही मोक्षप्रद होता है। सब आगमों और मेरे द्वारा भी यही मान्य है॥ ३३१॥

तदाह

**तेनोक्तं मालिनीतन्त्रे विचार्य ज्ञानयोगिते ।**
**यतश्च मोक्षदः प्रोक्तः स्वभ्यस्तज्ञानवान्बुधः ॥ ३३२ ॥**

च शब्दोऽवधारणे भिन्नक्रमः। तेन स्वभ्यस्तज्ञानवानेव गुरुर्मोक्षप्रदः प्रोक्त इति ॥

ततश्चेदं सिद्धमित्याह

**तस्मात्स्वभ्यस्तविज्ञानतैवेकं गुरुलक्षणम् ।**

एकमिति न द्वितीयं, योगित्वमपीत्यर्थः ॥

ननु योग्यपि गुरुरुक्तः, तत्कथमेवमभिधातुं युज्यते । सत्यं, किंत्वयमस्ति विभागो यज्ज्ञानी तावद्योगिनो विशिष्यते इत्युक्तं, तत्रापि च कुत्र ज्ञानी योगी वा गुरुः कार्यः, कुत्र वा परिहार्य इति । स चेहास्माभिर्गुरुमुखाधिगतः प्रकाश्यते इत्याह

**विभागस्त्वेष मे प्रोक्तः शंभुनाथेन दर्श्यते ॥ ३३३ ॥**

एष इति वक्ष्यमाणः ॥ ३३३ ॥

---

मालिनी विजयोत्तर तन्त्र में ज्ञान और योग्यता का पूर्ण विचार कर यह प्रतिपादित किया गया है कि स्वभ्यस्त ज्ञानवान् गुरु ही मोक्ष प्रदान करने में सक्षम होता है। यह तथ्य शास्त्र-कोविदों द्वारा भी स्वीकृत किया जाता है ॥ ३३२ ॥

इसलिये शास्त्रकार यह उद्घोषित करते हैं कि, अभ्यस्त विज्ञानता ही गुरु के लक्षण रूप से स्वीकृत की जाती है। कारिका में प्रयुक्त 'एक' शब्द से स्वभ्यस्त विज्ञानता का ही ग्रहण करते हैं। इससे इसकी मुख्यता सिद्ध हो जाती है तथा योगिता गौण।

इस पर शङ्का होती है कि, योगी भी गुरु होते दृष्टिगोचर होते हैं। एक मात्र स्वभ्यस्त विज्ञानता का कथन क्यों ? इसका कारण यह है कि योगी से स्वभ्यस्त ज्ञानवान् गुरु ही उत्तम श्रेणी का होता है। इसके साथ ही यह ध्यान देने की बात है कि कहाँ ज्ञानी गुरु हो और कहाँ योगी ? कहाँ किन से बचना है—यह भी ध्यातव्य है। इस सम्बन्ध मे स्पष्ट कर रहे हैं कि यहाँ विभागमात्र

तदेवाह

**मोक्षज्ञानपरः कुर्याद्गुरुं स्वभ्यस्तवेदनम् ।**
**अन्यं त्यजेत्प्राप्तमपि तथाचोक्तं शिवेन तत् ॥ ३३४ ॥**

अन्यमित्यस्वभ्यस्तज्ञानम् । ननु 'गुरुत्यागाद्भवेन्मृत्युः' इत्यादिना प्राप्तस्य गुरोस्त्यागे दोषोऽभिहितः—इति कथमेवमुक्तमित्याशङ्क्याह 'तथा चोक्तं शिवेन तत्' इति । नैतन्निष्प्रमाणकमित्यर्थः ॥ ३३४ ॥

तदेव पठति

**आमोदार्थी यथा भृङ्गः पुष्पात्पुष्पान्तरं व्रजेत् ।**
**विज्ञानार्थी तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ॥ ३३५ ॥**

---

है । इसे हमारे परमगुरुवर्य भगवान् शम्भुनाथ ने मुझे बताया । उसे ही यहाँ उल्लिखित किया गया है ॥ ३३३ ॥

भगवान् शङ्कर ने दीक्षा के प्रसङ्ग में यह स्पष्ट निर्देश दिया है कि, जिस समय दीक्षा लेने की आकाङ्क्षा हो और गुरु का निश्चय करना हो, उस समय यह ध्यान देना चाहिये कि गुरु स्वभ्यस्त ज्ञानवान हो । वही मोक्ष ज्ञान परायण होता है । वही मोक्ष प्रदान करने में सक्षम होता है ।

जो अनभ्यस्त ज्ञानवान् है, यदि वह प्राप्त भी हो, तुरत तैयार भी हो, तो उसका अनिवार्यतः परित्याग कर देना चाहिये । इस बात पर यह उक्ति सामने आ जाती है कि 'गुरु के त्याग से मृत्यु होती है' इसके अनुसार गुरु के परित्याग में दोष होता है । ऐसी स्थिति में क्या करना चाहिये ? इस आशङ्का का निराकरण स्वयं भगवान् ही करते हैं । वही ऐसा करने का निर्देश देते हैं । इससे बढ़ कर क्या प्रमाण हो सकता है ? अतः ऐसा करने में कोई दोष नहीं होता ॥ ३३४ ॥

भगवान् शङ्कर के उस वचन को ज्यों का त्यों उद्धृत करते हैं—

वे कहते हैं कि सुगन्ध की लालसा रखने वाला भौंरा जैसे एक फूल से दूसरे फूल पर अनवरत आता जाता रहता है । एक का परित्याग कर दूसरे फूल पर पहुँच कर मकरन्द का आस्वाद लेता है, उसी तरह विज्ञान की इच्छा रखने वाला शिष्य एक गुरु से यदि उसके मिलने की सम्भावना नहीं तो दूसरे गुरु का अवश्य ही आश्रय ले, उसके पास जाय और ज्ञान प्राप्त करे ॥ ३३५ ॥

ननु विज्ञानार्थी शिष्यः, तच्चानेन कथंचिदाद्यादेव प्राप्तमिति किमस्य गुर्वन्तरगमनेनेत्याशङ्क्याह

**शक्तिहीनं गुरुं प्राप्य मोक्षज्ञाने कथं श्रयेत् ।**
**नष्टमूले द्रुमे देवि कुतः पुष्पफलादिकम् ॥ ३३६ ॥**

शक्तिहीनमिति विज्ञानदानादावसामर्थ्यात् । स हि स्वयमज्ञ इति परस्यापि किं कुर्यादित्याशयः ॥ ३३६ ॥

नन्विह भावना नाम मुख्या, साचाज्ञेऽपि गुरौ क्रियमाणावश्यं फलेदिति किं तत्त्यागेनेत्याशङ्क्याह

**उत्तरोत्तरमुत्कर्षलक्ष्मीं पश्यन्नपि स्थितः ।**
**अधमे यः पदे तस्मात्कोऽन्यः स्याद्दैवदग्धकः ॥ ३३७ ॥**

एवं भोगमोक्षाद्यभिवाञ्छतावश्यमुत्कृष्ट एव गुरुराश्रयणीयो, येनास्य तत्सिद्धिरयत्नमेव स्यादित्याह

---

प्रश्न करते हैं कि शिष्य विज्ञान प्राप्ति की इच्छा रखता है । यदि उसे पहले गुरु से हो वह मिल जाय, तो दूसरे गुरु के यहाँ जाने को उसे क्या आवश्यकता ? इस पर कह रहे हैं कि,

शक्ति होन गुरु को पाकर कोई शिष्य मोक्ष-लक्ष्मी की अक्षय उपलब्धि कैसे कर सकता है ? भगवान् कहते हैं कि प्रिये जब मूल ही कट जाय तो ऐसे पेड़ से फल फूल आदि को प्राप्ति कैसे हो सकती है ? गुरु को शक्ति होनता इसो अर्थ में यहाँ लो गयी है कि वह विज्ञानयुगी मोक्ष दोक्षा में असमर्थ है । जब गुरु स्वयं अज्ञ होगा, तो शिष्य को कैसे ज्ञानवान् बना सकता है ? ॥ ३३६ ॥

प्रश्न होता है कि भावना की प्रधानता भी स्वोकार को जातो है ( श्लोक ३२७ ) । भावना तो अज्ञ गुरु में भो पायो जातो है । शिष्य यदि अज्ञ गुरु में भी श्रद्धा भाव रखे, तो अवश्य हो भावना के बल से उसे सिद्धि मिल सकती है । इस पर कह रहे हैं कि,

उत्तरोत्तर उत्कर्ष की लक्ष्मी को देखते हुए भो जो अधम गुरु के चरणों में पड़ा समय गँवा रहा है, उससे बढ़कर अपने हो भाग्य में आग लगाने वाला कौन हो सकता है ? अर्थात् कोई नहीं ॥ ३३७ ॥

**यस्तु भोगं च मोक्षं च वाञ्छेद्विज्ञानमेव च ।**
**स्वभ्यस्तज्ञानिनं योगसिद्धं स गुरुमाश्रयेत् ॥ ३३८ ॥**

योगसिद्धमिति सिद्धयोगं तृतीयं योगिनमित्यर्थः, तस्य चावश्यंभावि स्वभ्यस्तज्ञानमित्युक्तं स्वभ्यस्तज्ञानिनमिति, यत्समनन्तरमेव संवादितं यतोऽस्य ज्ञानमप्यस्तीति ॥ ३३८ ॥

एवंविधश्चेद्गुरुर्न प्राप्यते, तदा किं कर्तव्यमित्याशङ्क्याह

**तदभावे तु विज्ञानमोक्षयोर्ज्ञानिनं श्रयेत् ।**

विज्ञानमोक्षयोरिति तन्निमित्तमित्यर्थः ।

एवमपि भुक्त्यर्थिना किं कार्यमित्याशङ्क्याह

**भुक्त्यंशे योगिनं यस्तत्फलं दातुं भवेत्क्षमः ॥ ३३९ ॥**

श्रयेदित्यनुषज्यते । सचार्थाद्घटमानसिद्धयोगयोरन्तरालवर्ती मितः । तदिति भुक्तिलक्षणम् ॥ ३३९ ॥

---

शिष्य को सर्वदा यह ध्यान रखना चाहिये कि हमें ऐसा गुरु मिले जो सब कुछ हस्तामलकवत् उपलब्ध करा दें—यही कह रहे हैं—

जो शिष्य भोग चाहता है, मोक्ष लक्ष्मी की इच्छा करता है और विज्ञान विज्ञ होने की कामना करता है, उसे चाहिये कि वह योगसिद्ध स्वभ्यस्त विज्ञानवेत्ता गुरुवर्य की शरण ग्रहण करे। योग सिद्ध तीसरे प्रकार का योगी होता है। उसमें अवश्यंभाविनी विज्ञानवेत्तृता होती है। उसे अनिवार्य ज्ञान हो जाता है। इसीलिये 'गुरु कीजे जान के' यह कहावत चरितार्थ होती है। ऐसे गुरु से तत्काल सिद्धि प्राप्त होती है ॥ ३३८ ॥

यदि ऐसा गुरु न मिले तो क्या करना चाहिये ? इस अशङ्का का समाधान कर रहे हैं कि,

इस श्रेणी के गुरु के अभाव में विज्ञान और मोक्ष प्रद गुरु का आश्रय ग्रहण करना चाहिये। पर इससे तो भुक्ति की सिद्धि नहीं हो सकती ? तब क्या करना चाहिये ? इस पर कह रहे हैं कि, इसके लिये उसी प्रकार के ऐसे गुरु का आश्रय लेना चाहिये, जो धटमान और सिद्ध योग योगियों के स्तर का हो। उससे यह काम सिद्ध हो सकता है ॥ ३३९ ॥

यः पुनः संप्राप्तो घटमानो वा योगी भुक्तिमात्रमपि दातुं न समर्थः परं तदुपायोपदेशकुशलः, तमनादृत्यापि ज्ञानी गुरुः कार्यो यस्तदुपायमुपदिशन् क्रमेण मोचयेदपीत्याह

**फलदानाक्षमे योगिन्युपायैकोपदेशिनि ।**
**वरं ज्ञानी योऽभ्युपायं दिशेदपि च मोचयेत् ॥ ३४० ॥**

ननु यद्येवं मितोऽपि ज्ञानी गुरुः कार्यः, तद्विज्ञानार्थिनः शिष्यस्य तत्परिपूर्तिः कुतः स्यादित्याशङ्क्याह

**ज्ञानी न पूर्ण एवैको यदि ह्यंशांशिकाक्रमात् ।**
**ज्ञानान्यादाय विज्ञानं कुर्वीताखण्डमण्डलम् ॥ ३४१ ॥**
**तेनासंख्यान्गुरून्कुर्यात्पूरणाय स्वसंविदः ।**

---

जो सम्प्राप्त या घटमान योगी होते हैं, वे तो शिष्य को मुक्ति मात्र भी देने में समर्थ नहीं हैं, किन्तु उसके उपाय बताने में या उपदेश में कुशल हैं, ऐसे गुरु पद पर प्रतिष्ठित व्यक्ति को छोड़कर ज्ञानी गुरु करना चाहिये, जो उन उपायों का उपदेश करता हुआ क्रमशः मुक्ति की ओर भी अग्रसर करने में समर्थ होता है । यही कह रहे हैं—

फल देने में भी अक्षम और उपदेश कुशल योगी गुरु की अपेक्षा ज्ञानी गुरु ही श्रेष्ठ होता है । ज्ञानी गुरु फल प्रदान करने में भी समर्थ होता है और क्रमशः मुक्ति की दिशा में शिष्य को अग्रसर कर मुक्ति का पथ प्रशस्त कर देता है । इस प्रकार यह मोक्ष का एक मात्र कारण सिद्ध हो जाता है ॥ ३४० ॥

ज्ञानी गुरु में भी श्रेणी का तारतम्य होता है । यदि वह मित ज्ञानी है और उसे भी गुरु बना लिये जाने की बात की जाती है, तो विज्ञानार्थी शिष्य की विज्ञान सम्बन्धी इच्छा की पूर्त्ति कैसे हो सकती है ? इसका समाधान कर रहे हैं कि,

यदि पूर्णज्ञानी एक गुरु नहीं मिलता है, तो अंशांशिका क्रम से भिन्न-भिन्न गुरुजनों से उन-उन इच्छित ज्ञानों का अर्जन करना चाहिये । इस तरह अनेक गुरुजनों से ज्ञान पाकर अपने को अखण्ड माण्डलिक ज्ञानवान् बना लेना ही मुख्य कर्त्तव्य है । इसके लिये अर्थात् स्वात्मसंविद् की बोध प्रकाश

पूरणाय महतापि प्रयत्नेन निःसंख्याका गुरवः कार्याः, नैवं कश्चित्प्रत्यवाय इत्यर्थः ॥

तीव्रशक्तिपाताघ्रातः पुनः पूर्णज्ञानमेव गुरुमासादयेत् यत्प्रसादादनायासमेवास्य स्वात्मनो विज्ञानपारिपूर्ण्यं समुदियादित्याह

**धन्यस्तु पूर्णविज्ञानं ज्ञानार्थी लभते गुरुम् ॥ ३४२ ॥**

अत्र चाहमेवोदाहरणं यद्विज्ञानार्थिना मया लोकोत्तरे द्वयाद्वयात्मनि शैवशास्त्रादावभिख्यामात्रप्रख्यापितपरश्रेयःसंश्रयः श्रीमान् कल्याणः पूर्णविज्ञानवानेक एव गुरुर्लब्धः, पदवाक्यप्रमाणादौ लौकिके श्रीमान् सुगृहीतनामधेयः शङ्खधरश्चेति ॥ ३४२ ॥

ननु यदि नाम एकस्मादेव पूर्णविज्ञानशालिनो गुरोरनायासमेव पूर्ण ज्ञानं स्यात् तदस्तु, तदर्थं पुनर्नानागुर्वादिसंभरणात्मा प्रयत्नोऽपि कस्मात्क्रियते इत्याशङ्क्याह

---

से भर देने के लिये असंख्य गुरु किये जा सकते हैं। इसमें अपनो प्रतिष्ठा आड़े नहीं आनी चाहिये। एक गुरु से अपने को माण्डलिक पूर्ण विज्ञानवान् बनाना सम्भव नहीं है। अतः असंख्य गुरुओं से अनन्त ज्ञान पा लेने में कोई कठिनाई नहीं है। इस कार्य में किसी प्रकार का कोई विघ्न नहीं होता ॥ ३४१ ॥

वह साधक धन्य हो जाता है, जो सौभाग्यवश एक ही पूर्णज्ञानवान् गुरु प्राप्त कर लेता है। किसी भी ज्ञानार्थी को ऐसा गुरु मिल जाय, यह उसके लिये सौभाग्य का विषय है।

आचार्य जयरथ यहाँ स्वात्मप्रकाशन के लोभ का संवरण नहीं कर सके हैं। उन्होंने यह रहस्य स्वयम् उद्घाटित कर इतिहास के बन्द पृष्ठों को खोल सा दिया है। वे कहते हैं कि मैं स्वयम् इसका एक मात्र उदाहरण हूँ। मैं विज्ञानार्थी था। मैंने लोकोत्तर द्वैताद्वैतात्मक शैवशास्त्रों में अपनी विश्वविश्रुत कीर्त्ति से परमकल्याणकारी श्रेय का संश्रय ग्रहण करने वाले मुक्ति के मूर्त्तिमन्त प्रतीक श्रीमान् 'कल्याण' नामक पूर्णविज्ञानवान् एक गुरु प्राप्त कर लिया था। यह मेरा सौभाग्य ही था। पदवाक्य प्रमाणादि लौकिक शास्त्रों का ज्ञान भी मैंने सुगृहीत नामधेय आचार्यशङ्खधर से प्राप्त किया। श्रीमान् कल्याण और आचार्यशङ्खधर उस समय के प्रसिद्ध विद्वान् थे ॥ ३४२ ॥

**नानागुर्वागमस्रोतःप्रतिभामात्रमिश्रितम् ।**
**कृत्वा ज्ञानार्णवं स्वाभिर्विप्रुड्भिः प्लावयेन्न किम् । ३४३ ।**

स्रोतः सन्ततिर्नदीप्रवाहश्च, प्रतिभा सांमुख्येन भानं, मिश्रितं पूरितं किं न प्लावयेदिति सर्वमेव ज्ञानसंविभागभाजनं कुर्यादित्यर्थः ॥

एतच्च गुरुभिरप्युक्तमित्याह

**आ तपनान्मोटकान्तं यस्य मेऽस्ति गुरुक्रमः ।**
**तस्य मे सर्वशिष्यस्य नोपदेशदरिद्रता ॥ ३४४ ॥**
**श्रीमता कल्लटेनेत्थं गुरुणा तु न्यरूप्यत ।**

---

प्रश्न करते हैं कि यदि एक ही पूर्णज्ञानवान् गुरु से अनायास ही पूर्ण ज्ञान हो जाये, तो ठीक ही है, पर पूर्ण ज्ञान की प्राप्ति के लिये असंख्य गुरुजनों से ज्ञान संभार जुटाने की बात क्यों ? इस पर कह रहे हैं कि,

विभिन्न आगमिक स्रोतों में प्रतिभा के अनन्त बीज विद्यमान होते हैं। जितने बोध के अमृत तत्त्व उल्लसित रहते हैं, उनमें उनसे मिश्रित स्वात्म संविद् के लहराते अपरंपार ऊर्मिल महासागर को नाना गुरुजनों के ज्ञानामृत से क्यों न भरने का प्रयत्न किया जाय ? अर्थात् अवश्य प्रयत्न करना चाहिये।

श्लोक में प्रयुक्त स्रोतस् शब्द के कई अर्थ होते हैं। मुख्य अर्थ यहाँ आगमिक परम्परा से है। विभिन्न मठिकाओं में विभिन्न प्रकार के अनुभव और ज्ञान भरे हुए हैं। उनको प्राप्त करना शिष्य का कर्त्तव्य होता है।

स्रोतस् का दूसरा मुख्य अर्थ नदी का प्रवाह होता है। नदियां समुद्र में गिरती हैं। उसी तरह विभिन्न स्थानीय नदी प्रवाहवत् प्राप्त ज्ञानामृत को स्वात्म-ज्ञान के महासागर में मिलाना ही शिष्य का कर्त्तव्य है।

'प्रतिभा' के भी विभिन्न अर्थ होते हैं। यहाँ प्रत्यभिज्ञात्मक ज्ञान अर्थ में प्रयुक्त है। मिश्रित मिले हुए, भरे हुये और पूरी तरह पूर्ण अर्थ में प्रयुक्त है। इन उक्तियों से यह सिद्ध होता है कि ज्ञान के महा समुद्र में अपने अस्तित्व के सत्त्वामृत को अवश्य मिलाना चाहिये ॥ ३४३ ॥

इन तथ्यों का वर्णन विभिन्न गुरुजन भी करते हैं। वही कह रहे हैं—

श्रीमान् कल्लट नामक कश्मीर के सुप्रसिद्ध विद्वान् हो चुके हैं। वे

अनेनैवाशयेन मयापि नानागुरूपसेवनं कृतमित्याह

**अहमप्यत एवाधःशास्त्रदृष्टिकुतूहलात् ॥ ३४५ ॥**

**तार्किकश्रौतबौद्धार्हद्वैष्णवादीन्नसेविषि ।**

कुतूहलादिति नत्वादरात्, तार्किका नैयायिकवैशेषिकादयः ॥

ननु यथा वैष्णवादिभ्यः शैवादीनां गुरूणामेवमुत्कर्षः तथैषामधरशासन-स्थानामपि परस्परं किमस्ति नवेत्याशङ्क्याह

---

अपनी परम्परा के मान्य गुरु भी थे। उन्होंने यह स्पष्ट लिखा है कि 'तपन से लेकर मोटक पर्यन्त मेरे गुरुओं का एक स्वतन्त्र क्रम है। मैं उन सभी का एक विश्रुत नामधेय शिष्य हूँ। मेरे पास उपदेश दरिद्रता का प्रश्न ही नहीं उठता'। कल्लट की यह उक्ति असंख्य गुरुओं से अनन्त ज्ञान ग्रहण कर अपने ज्ञान के अर्णव को पूर्ण करना उचित है—यह सिद्ध करती है।

कारिका में 'आतपनान्मोटकान्तं' मुहाविरे का प्रयोग है। तपन सूर्य या सूर्यकान्तमणि को कहते है। जन्म संस्कार में सूर्य दर्शन प्रक्रिया अपनायी जाती है। इसी तरह मोटक शब्द कुश के दो पत्तियों वाले उसके तने को कहते हैं। यह श्राद्ध में प्रयोग में आता है। अर्थात् जन्म से मृत्यु पर्यन्त इसका अर्थ होता है। सूर्योदय से सूर्यास्त का अर्थ भी यहाँ लिया जा सकता है। तपन वृष को भी कहते हैं। महाँ देवो वृषभोरोरवीति के अनुसार चार सीगों दो शिरों और सात हाथों वाले देव का ही विश्वजनीन महत्त्व है। प्रकाश ही उसका कार्य है। वही प्राण है। प्राण में ही पहले संविद् परिणत हुई। अतः संविदैक्य साधक सारे कार्य आतपन मोटकान्त कालावधि में ही करे, यह उचित है ॥ ३४४ ॥

शास्त्रकार अब अपने अध्ययन काल में विभिन्न गुरुजनों से सम्पर्क होने की बात स्वयं स्वीकार कर रहे हैं—

मैंने भी अधःशास्त्र दृष्टि में कुतूहल वश अनेक गुरुजनों से विद्यायें लीं, उनकी सेवा में रहा। इन गुरुओं में तार्किक, श्रौत, बौद्ध, आर्हत और वैष्णव आदि भी थे। यद्यपि कहा गया है कि तार्किकं न गुरुं कुर्यात्' फिर भी कुतूहल की दृष्टि से न्याय और वैशेषिक दर्शन के रहस्यों को जानने के उद्देश्य से भी इनका सेवन किया ॥ ३४५ ॥

लोकाध्यात्मातिमार्गादिकर्मयोगविधानतः ॥ ३४६ ॥
संबोधोत्कर्षबाहुल्यात्क्रमोत्कृष्टान्विभावयेत् ।

लोकः श्रुतिस्मृत्यादिः, अध्यात्म वेदान्तादिः, अतिमार्गो लौकिकमार्गातीतं सांख्यपातञ्जलादि, एवमादावग्निष्टोमादेः कर्मणः, चित्तवृत्तिनिरोधात्मनश्च योगस्य विधानतो हेतोः सम्यग्बोधस्य यथायथमुत्कर्षतारतम्यात् क्रमोत्कृष्टान्वैदिकादीन् गुरून्विभावयेज्जानीयादित्यर्थः ।

---

प्रश्न करते हैं कि वैष्णवादिकों से शैव आदि गुरु जनों का उत्कर्ष माना जाता है, उसी तरह अधरशासन में रहने वालों में भी परस्पर उत्कर्ष होता है या नहीं, इस पर कह रहे हैं कि,

लोक, अध्यात्म, अतिमार्ग आदि के कर्म और योग इन दोनों दृष्टियों से तथा संबोध के उत्कर्ष में तारतम्य की दृष्टि से क्रमशः उत्कृष्ट श्रेणी के गुरुजनों का विभावन करना चाहिये ।

यहाँ प्रयुक्त कुछ पारिभाषिक शब्दों पर ध्यान देना आवश्यक है । जैसे,

१—लोक—श्रुतियों और स्मृतियों के सिद्धान्तों के अनुसार ही लोक व्यवहार चलता है । अतः लोक कह देने से श्रुति स्मृति आदि लोक प्रचलित शास्त्रों का बोध होता है ।

२—अध्यात्म—आत्मा के अधिक्षेत्र में जितने शास्त्र आते हैं, वे अध्यात्म शास्त्र हैं । जैसे वेदान्त दर्शन आदि ।

३—अतिमार्ग—लौकिक मार्गों को अतिक्रान्त कर निर्मित शास्त्र इस श्रेणी में आते हैं । जैसे सांख्य और पतञ्जलि निर्मित पातञ्जल योग दर्शन आदि ।

४—कर्म—जीवन की दिशा को जागरण की ओर प्रेरित करने वाले अग्निष्टोम आदि याज्ञिक कर्म ही यहाँ अर्थतः लिये गये हैं ।

५—योग—अष्टाङ्ग योग मार्ग । इसमें चित्तवृत्तियों के निरोध से लेकर अन्य योग जैसे राज योग आदि भी आते हैं ।

६—संबोधोत्कर्षबाहुल्य—सम्यक् बोध प्रकाशात्मक होता है । जिससे आगे का पथ प्रशस्त हो, वही संबोध का उत्कर्ष माना जाता है । इसकी अधिकता के तारतम्य से इन अधःस्थ गुरुजनों में भी श्रेणी का अनुभावन आवश्यक है ॥ ३४६ ॥

एवं वैष्णवादिक्रमेण यथायथं संबोधोत्कर्षभाजामेव मुनीनामस्मद्दर्शनं प्रत्यपि जिज्ञासा जातेत्याह

**श्रीपूर्वशास्त्रे प्रष्टारो मुनयो नारदादयः ॥ ३४७ ॥**
**प्राग्वैष्णवाः सौगताश्च सिद्धान्तादिविदस्ततः ।**
**क्रमात्त्रिकार्थविज्ञानचन्द्रोत्सुकितदृष्टयः ॥ ३४८ ॥**

एवं यथायथमूर्ध्वोर्ध्वक्रमेण गुरुशास्त्रपरिचयात् संबोधोत्कर्षो भवेदिति न गुरुभूयस्त्वे विचिकित्सितव्यमित्याह

**तस्मान्न गुरुभूयस्त्वे विशङ्केत कदाचन ।**

ननु

**'गुर्वन्तररते मूढे आगमान्तरसेवके ।**
**शक्तिहिंसाकरे द्विष्टे संपर्कं नैव कारयेत् ॥'**

---

षडर्ध दर्शन के आकर्षण से सर्वप्रथम आकृष्ट होने वाले मुनि इन्हीं वैष्णवादि गुरुक्रम से आये । इसी का कथन कर रहे हैं—

श्री पूर्वशास्त्र में प्रश्न पूछने वाले नारद आदि मुनि कौन थे ? ये पहले वैष्णव ही थे । इसी प्रकार सौगत आदि सिद्धान्त आदि मार्गों के गुरु क्रम से भी लोग इधर खिंचे और क्रमशः त्रिकदर्शन के रहस्य विज्ञान की ज्योत्स्ना से से प्रभावित होकर पर-चन्द्र के अमृतपान में अग्रसर हो सके थे । ये सभी संबोधोत्कर्ष से समन्वित थे ॥ ३४७-३४८ ॥

इस प्रकार यथाक्रम ऊर्ध्व और ऊर्ध्व मार्ग की ओर अग्रसर होते रहने से विभिन्न गुरुजनों, विभिन्न शास्त्रों और परम्पराओं का परिचय मिलता है । स्वात्म संबोध में उत्कर्ष होता है । अतः गुरु-भूयस्त्व में किसी प्रकार की विचिकित्सा नहीं करनी चाहिये । यही कह रहे हैं—

इसलिये अनेक गुरुजनों से ज्ञान ग्रहण करने में किसी प्रकार की आशङ्का के लिये कोई स्थान नहीं है ।

एक स्थान पर इसके विपरीत लिखा है कि "गुर्वन्तर में रत, मूढ, अन्यान्य आगमों के स्वाध्याय में लगे रहने वाले लोगों से, बलपूर्व हिंसा करने वाले और द्वेषदक्ष लोगों से किसी प्रकार का कोई सम्पर्क नहीं करना चाहिये ।"

इत्याद्युक्त्या गुर्वन्तररतस्यास्पृश्यत्वमभिहितमिति गुर्वन्तरगमने विवेकिनः शङ्कावश्यमुदियादित्येवं कस्मादुक्तमित्याशङ्क्याह

**गुर्वन्तररते मूढे आगमान्तरसेवके ॥ ३४९ ॥**
**प्रत्यवायो य आम्नातः स इत्थमिति गृह्यताम् ।**

इत्थमिति वक्ष्यमाणप्रकारेण ॥

तदेवाह

**यो यत्र शास्त्रेऽधिकृतः स तत्र गुरुरुच्यते ॥ ३५० ॥**
**तत्रानधिकृतो यस्तु तद्गुर्वन्तरमुच्यते ।**

तत्रानधिकृत इति यथा वामे सैद्धान्तिकः ।

एतदेव दृष्टान्तोपदर्शनेन हृदयङ्गमयति

**यथा तन्मण्डलासीनो मण्डलान्तरभूपतिम् ॥ ३५१ ॥**
**स्वमण्डलजिगीषुः सन्सेवमानो विनश्यति ।**

---

इस उक्ति के अनुसार दूसरी परम्पराओं में दक्ष गुरु में श्रद्धा रखने वाले को अस्पृश्य माना और कहा गया है। इस आधार पर दूसरे गुरुजनों से सम्पर्क करने पर विवेकशील पुरुष अवश्य ही संकोच करेगा। इस सम्बन्ध में क्या करना चाहिये ? इस पर अपना दृष्टिकोण प्रस्तुत कर रहे हैं—

गुर्वन्तर में रत, मूढ अन्य आगामिकों के अनुयायी व्यक्तियों के सम्पर्क से जिस प्रत्यवाय की बात कही गयी है, उसको इस प्रकार लेना चाहिये,

जो जिस शास्त्र में अधिकृत है, वह उसी शास्त्र के गुरुत्व का सम्पादन कर सकता है। जो उस शास्त्र में अधिकृत नहीं है, उसे ही गुर्वन्तर मानना चाहिये। जैसे वामतन्त्रों में सैद्धान्तिक अनधिकृत गुरु है ॥ ३४९-३५० ॥

इस तथ्य को दृष्टान्त के माध्यम से समझाने का अनुग्रह कर रहे है—

जैसे किसी मण्डल को किसी मण्डलाधिपति ने जीत रखा है। पुराना मण्डलाधिकारी उसे पुनः जीतने की इच्छा से उसी मण्डल में नये विजेता मण्डलाधिपति की सेवा में रह कर विनाश को प्राप्त करता है। उसी तरह उत्तर उत्तर ज्ञान की सिद्धि की चाह रखने वाला अधर अधर आचार्यों की सेवा में रहकर विनाश को प्राप्त करता है।

**तथोत्तरोत्तरज्ञानसिद्धिप्रेप्सुः समाश्रयन् ॥ ३५२ ॥**
**अधराधरमाचार्यं विनाशमधिगच्छति ।**

इह यथा तस्मिन्नेव मण्डले स्थितः कश्चित्तदेव स्वमास्पदभूतं मण्डलमपहृतप्रायं जेतुमिच्छुस्तत्रानधिकारिणमपि मण्डलान्तरभूपतिं सेवमानो विनश्यति तज्जयोऽस्य माभूत् प्रत्युतानर्थान्तरं किंचिदुदियादित्यर्थः। एवमूर्ध्वोर्ध्व एव ज्ञाने स्थितस्तत्सिद्धिमेव च प्राप्तुमिच्छुस्तदनधिकृतमधराधरमाचार्यं समाश्रयन्विनाशमधिगच्छति तत्सममुदितेऽमुष्यभुक्तिमुक्ती मा स्यातां प्रत्युत प्रत्यवायित्वं भवेदित्यर्थः।

न केवलमेतत्स्वदर्शनमेवाधिकृत्योक्तं, यावद्दर्शनान्तराण्यपीत्याह

**एवमेवोर्ध्ववर्तिष्णोरागमात्तसिद्धिवाञ्छकः ॥ ३५३ ॥**

---

कई जनपदों के क्षेत्रों को मिलाकर एक मण्डल बनता है। पुराने समय के छोटे छोटे राज्य मण्डलमात्र थे। प्रदेश नहीं थे। मण्डल का स्वामी मण्डलाधिपति कहलाता है। ऐसे छोटे राजेरजवाड़े एक दूसरे पर पहले चढ़ाई करते लड़ते और जीत कर अपना अधिकार कर लेते थे। कोई उनका नियन्ता नहीं था।

उसी समय की घटनाओं पर आधारित यह उदाहरण है। इसे यों चरितार्थ करना चाहिये—

उत्तरोत्तर ज्ञान को चाहत रखने वाला स्वमण्डलजिगीषु है। वह गुर्वन्तर रूप दूसरे शास्त्र रूपी मण्डल के अधिपति के यहाँ उसे जीतने की इच्छा को छिपाये, वहीं रहने लगा। दूसरा शास्त्र अधर शास्त्र है और उसका अधिपति अधर आचार्य। यहाँ उत्तरोत्तर रहस्य दर्शन जन्य ज्ञान की इच्छा वाला खतरे में पड़ सकता है। इसीलिये यह निर्देश किया गया है कि, उत्तर उत्तर ज्ञान की सिद्धि पाने का महत्त्वाकांक्षी अधर-अधर आचार्य की सेवा में रहकर और अधर अधिकारी की सेवा में जाकर स्वयं प्राप्त तपस्या की सिद्धियों का भी भूल सकता है। यह कोई कम खतरे की बात नहीं। यदि ऐसा घटित हो जाये, तो यह किसी विनाश से बढ़कर ही विनाश माना जायेगा ॥ ३५१-३५२ ॥

यही बात व्यतिरेक मय आचरण में भी होती है। जैसे एक साधक मायीय लौकिक शास्त्रों के स्वाध्याय में रत है। उनके बताये रास्ते की उपासना

**मायीयशास्त्रनिरतो विनाशं प्रतिपद्यते ।**
**उक्तं च श्रीमदानन्दे कर्म संश्रित्य भावतः ॥ ३५४ ॥**

**जुगुप्सते तत्तस्मिंश्च विफलेऽन्यत्समाश्रयेत् ।**
**दिनादि्दनं ह्रसंस्त्वेवं पच्यते रौरवादिषु ॥ ३५५ ॥**

न चैतन्न्यायमात्रसिद्धमेवेत्याह 'उक्तं च' इत्यादि । यः कश्चिदुत्तरोत्तर-शास्त्रीयमपि कर्म संश्रित्य भावतो जुगुप्सते तत्र निष्ठां न यायादिति तस्मिन्निष्फलेऽन्यन्मायीयशास्त्रीयं कर्म सम्यगाहृदयादाश्रयेत्, स पुनरिह लोके दिनाद्दिनं ह्रसन् धनदारादिभिरपचीयमानः परत्र रौरवादिषु पच्यते पापफलभाग्भवेदित्यर्थः । एवंपाठश्च जरत्पुस्तकेषु शतशो दृष्टः ॥

ननु यद्येवमूर्ध्वशासनस्थोऽप्यधराधरे गुर्वादौ रज्यन् प्रत्यवेयात्, तदूर्ध्वोर्ध्वं मार्गं प्राप्तुमिच्छुरधरं गुर्वादि परिहरन् कीदृक् स्यादित्याशङ्कयाह

---

करता है। उसके मन में यदि यह बात आ जाय कि मैं उत्तरोत्तर उत्कर्ष से संवलित ऊर्ध्व समाम्नाय की सिद्धि पाऊँ और इसके लिये वह लग जाय तो विनाश को प्राप्त करता है। श्रीमदानन्द शास्त्र में यह बात कही गयी है।

ऐसा अनवस्थित चेता साधक कर्म तो उत्तरोत्तर शास्त्र के अनुसार करने का प्रदर्शन करता है किन्तु भाव से उसकी जुगुप्सा भी करता है। यह निश्चय है कि, इस दोहरे आचरण से वह विफल होगा ही। विफल होने पर फिर अन्य अधर मार्ग का समाश्रयण करता है। उसकी यही नियति ही बन गयी है। इसका फल उसे मिलता है। वह दिनों दिन क्षीणता को प्राप्त करता हुआ अन्त में रौरवादिनरकों में पकने को विवश हो जाता है।

इसलिये किसी कार्य में निष्ठा आवश्यक है। काम प्रारम्भ करने के पहले उपाय और अपाय दोनों का विचार कर लेना चाहिये। अन्यथा असफलता ही हाथ लगती है ॥ ३५३-३५५ ॥

प्रश्न करते हैं कि, यदि इस तरह ऊर्ध्व शासन में स्थित उपासक भी अधराधर गुरु के समाश्रयण से प्रत्यवाय ही प्राप्त करता है, तो ऊर्ध्व मार्ग की प्राप्ति का इच्छुक अधरस्थ गुरुजनों को छोड़ने के लिये क्या करे, जिससे उसका कल्याण हो सके ? इस पर कह रहे हैं कि,

**यस्तूर्ध्वोर्ध्वपथप्रेप्सुरधरं गुरुमागमम् ।**
**जिहासेच्छक्तिपातेन स धन्यः प्रोन्मुखीकृतः ॥३५६॥**

एवमेवंविधानामेवानुग्राह्यतयास्मद्दर्शनसंस्कारविशेषोऽप्युक्त इत्याह

**अत एवेह शास्त्रेषु शैवेष्वेव निरूप्यते ।**
**शास्त्रान्तरार्थानाश्वस्तान्प्रति संस्कारको विधिः ॥३५७॥**

नचैतदेवास्य दर्शनस्योत्तमत्वे निमित्तं, यावदन्यदपीत्याह

**अतश्चाप्युत्तमं शैवं योऽन्यत्र पतितः स हि ।**
**इहानुग्राह्य ऊर्ध्वोर्ध्वं नेतस्तु पतितः क्वचित् ॥ ३५८ ॥**

ऊर्ध्वोर्ध्वमिति यथा वैष्णवादिः शैवे, स वामे स च दक्षे इति । क्वचिदिति वैष्णवादी ॥

---

जो शिष्य ऊर्ध्वपथ को पाना चाहता है, वह अधःस्थ गुरु और अधरस्थ आगम दोनों को छोड़ने को इच्छा को जागृत करे, शक्तिपात के अमृत से नहा कर पवित्र बनने का अवसर हाथ से न जाने दे। इसके लिये समर्थ गुरु को शरण ग्रहण करे । ऐसा अवसर पाने वाला शिष्य धन्य है। अब वह प्रोन्मुखीकृत हो गया होता है ॥ ३५६ ॥

ऐसे अनुग्राह्य शिष्य के लिये विशेष संस्कार के निर्देश हमारे दर्शन में दिये गये हैं। ये संस्कार शैव शास्त्रों में निरूपित किये गये हैं। शास्त्र में ऐसी विधियों के निर्देश विशेष रूप से ऐसे ही लोगों के लिये हैं, जो शास्त्रान्तर से आये हैं और उत्कृष्ट ऊर्ध्व लक्ष्य के आकाङ्क्षी हैं। उन्हें हमारा दर्शन आश्वासन देता है। अतः ये लोग आश्वस्त भी होते हैं। इन आश्वस्तों के संस्कार के लिये ही विधि का निर्देश है ॥ ३५७ ॥

यह हमारे दर्शन को उत्तमता का प्रमाण है। यही नहीं अन्य प्रमाण भी इसके लिये हैं—

यह शास्त्र इसलिये भी उत्तम है कि, अन्यत्र शास्त्र में पतित व्यक्ति भी हमारे लिये अनुग्राह्य है। हम उसे रहस्य के ऊपर और ऊपर शिखर तक निर्बाध पहुँचाते हैं। हमारा यह उद्घोष है कि, इस दर्शन का सिद्ध साधक कभी पतित नहीं होता । यह ध्यान देने की बात है कि, यदि वैष्णव है, तो उसे

एवं ह्यस्मद्दर्शन इव तत्रापि तं प्रति कश्चन लिङ्गोद्धारप्रायः संस्कार-विशेषोऽभिहितः स्यात् । तदाह

**अत एव हि सर्वज्ञैर्ब्रह्मविष्ण्वादिभिर्निजे ।**
**न शासने समाम्नातं लिङ्गोद्धारादि किंचन ॥ ३५९ ॥**

सर्वज्ञैरिति ते ह्येवं जानते यदूर्ध्वोर्ध्ववर्तिनां शैवादीनामस्मदादिदर्शनानुग्राह्यत्वं नास्तीति ॥

ननु यद्येते सर्वज्ञाः, तदत्युत्कृष्टं शैवं ज्ञानमपहाय कस्मादेवमपकृष्टं ज्ञानमादिशन्नित्याशङ्क्याह

**इत्थं विष्ण्वादयः शैवपरमार्थैकवेदिनः ।**
**कांश्चित्प्रति तथादिक्षुस्ते मोहाद्विमतिं श्रिताः ॥ ३६० ॥**

कांश्चिदिति तावदुपदेशयोग्यान् । तथेति अपकृष्टज्ञानात्मना प्रकारेणेत्यर्थः । तेषां च तावतैव मोहवशादिदमेव तत्त्वमिति विरुद्धो निश्चय इत्युक्तं ते मोहाद्विमतिं श्रिता इति ॥

---

शैव शास्त्र में प्रवीण कर, यदि वाम है तो दक्ष मार्ग में पवित्र कर ऊपर उठाया जाता है । यही ऊर्ध्व ऊर्ध्व क्रम है । ऐसा साधक फिर कभी वैष्णवादि अधर मार्ग में पतित नहीं हो सकता ॥ ३५८ ॥

अपने को सर्वज्ञ मानने वाले ब्रह्मवादी और वैष्णव मतवादियों द्वारा स्वीकृत शासन में अर्थात् उनके गुरु द्वारा निर्दिष्ट आम्नाय में कहीं भी लिङ्गोद्धारादि संस्कारों की चर्चा नहीं की गयी है । सर्वज्ञ शब्द पर विप्रतिपत्ति अवश्य होती है पर वह इसलिये निराकृत हो जाती है कि, यहाँ सर्वज्ञ से यही तात्पर्य है कि, वे यह सब जानते हैं कि शैवादि दर्शन के उपासकों पर हम जैसे लोगों का अनुग्राह्यत्व नहीं है ॥ ३५९ ॥

फिर पूछते हैं कि किसी भी तरह यदि ये सर्वज्ञ हैं, तो ऐसे ऊर्ध्वस्थ शासन को छोड़कर क्यों अधर में जीते और अन्य लोगों को भी ऐसा करने का आदेश देते हैं ? इस पर कह रहें हैं कि,

इस प्रकार विष्णु को आराध्य मानने वाले भी शैव परमार्थ दर्शन के वेत्ता होने पर भी उपदेश योग्य शिष्यों के आने पर वे ऐसा ही कहने की इच्छा रखने पर भी मोहवश विमति ग्रस्त होकर फिर वही अधर उपदेश देने को विवश हो जाते हैं ॥ ३६० ॥

तेषां च तत्रैवाभिनिवेशाद्ब्रह्माद्यैरपि तदेव दाढर्येनोपदिष्टमित्याह

**तथाविधामेव मतिं सत्यसंस्पर्शनाक्षमाम् ।**
**दृष्ट्वैषां ब्रह्मविष्ण्वाद्यैर्बुद्धैरपि तथोदितम् ॥ ३६१ ॥**

तथाविधामिति निरुद्धाम्, अत एवोक्तं सत्यसंस्पर्शनाक्षमामिति । बुद्धैरपि शैवपरमार्थतया प्रबुद्धैरपीत्यर्थः । तथेति तत्तदाशयोचितेनापकृष्टज्ञानात्मना प्रकारेणेत्यर्थः ॥ ३६१ ॥

प्रतिज्ञातमेवाह्निकार्थं प्रथमार्धेनोपसंहरति

**इत्येष युक्त्यागमतः शक्तिपातो विवेचितः ।**

विवेचित इति शिवम् ॥

---

इन लोगों के मोह का यह परिणाम होता है कि, इनका उन्हीं अधःस्थ-शास्त्रों में अभिनिवेश हो जाता है। इस दुराग्रह से ग्रस्त ब्रह्मादि मतवादी गुरुओं ने भी वैसा हो दुराग्रह पूर्ण उपदेश दिया है—वही कह रहे हैं—

सत्य के स्पर्श का भी साहस न रख सकने वाली इनकी ऐसी मति देखकर प्रबुद्ध ब्राह्म वैष्णव गुरुओं ने भी उसी प्रकार के सिद्धान्त प्रदर्शन कर अपनी भ्रान्ति की प्रतिष्ठा ही की है। कारिका में प्रयुक्त तथाविध का अर्थ विरुद्ध होता है। विरुद्ध होने के कारण ही उनकी उक्तियाँ सत्य से परे हो गयी हैं। बुद्ध शब्द भी शैवादि शास्त्रों को परमार्थ दृष्टि से जानने में समर्थ विवेकशील प्रबुद्ध पुरुष अर्थ में किया गया है। ऐसा होने पर भी अपकृष्ट ज्ञान के प्रवर्त्तन में उनकी शक्ति का दुरुपयोग ही हुआ है ॥ ३६१ ॥

पूरे आह्निकार्थ का ( जिसका विश्लेषण अब तक किया गया है ) १३-१४ आह्निक-प्रयुक्त उभयनिष्ठ श्लोक की पहली अर्धाली से उपसंहार कर रहे हैं—

इस प्रकार युक्तियों और आगमिक प्रामाण्यों द्वारा 'शक्तिपात' की विवेचना पूरी हुई। ॐ नमः शिवाय ॥

परमेशशक्तिपातव्यक्तस्वात्मीयवीर्यवैभवतः ।
प्रभविष्णुराह्निकार्थं त्रयोदशं जयरथः स्फुटं व्यवृणोत् ॥

इति श्रीमहामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्ताचार्यविरचिते तन्त्रालोके श्रीजयरथविरचितविवेकाभिख्यव्याख्योपेते शक्तिपातप्रदर्शनं नाम त्रयोदशमाह्निकम् ॥ १३ ॥

---

तेरहवाँ यह शक्तिपातमय तन्त्रालोकाह्निक अवदात ।
इसकी विमल विवेक - विवृतिकृति जयरथ की विष्वक् विख्यात
परमेश्वर के शक्तिपात से व्यक्त - वीर्य वैभव विभ्राट्
आगमविद् वरेण्य विद्वद्वर जय कल्याण-शिष्य-सम्राट् ॥

× × × ×

आस्थया श्रद्धया भक्त्या
संस्मरन् परमेष्ठिनम् ।
महामाहेश्वराचार्यं
स्वगुरुं योगिनीभुवम् ॥
त्रयोदशमिमं शाक्तः
शक्तिपाताभिधाह्निकम् ।
'हंसः' व्याकृतवान् शैव—
शक्तिपातपवित्रितः ॥

श्रीमन्महामाहेश्वराचार्य श्रीमदभिनवगुप्तपाद विरचित
श्रीराजानकजयरथकृतविवेक-व्याख्योपेत
डॉ० परमहंसमिश्र विरचित नीरक्षीरविवेक
हिन्दी भाष्य संवलित
श्री तन्त्रालोकका शक्तिपातनामक तेरहवाँ आह्निक
सम्पूर्ण ऐं सौः ऐं
शुभं भूयात्

# मूलश्लोकादिपंक्तिक्रमः

## दशमम् आह्निकम्

| मातृकाक्रमेणाद्यपंक्तयः | श्लोकसंख्या |
|---|---|
| अकलेन विशेषाय सकलस्यैव युज्यते | १३० |
| अकलौ स्वप्नसौषुप्ते तुर्यं मन्त्रादिवर्गभाक् | ३०३ |
| अत एव यथा येन वपुषा भाति यद्यथा | ८२ |
| अत एव यथा भेदबहुत्वं दूरता तथा | २१३ |
| अतएव शिवावेशे द्वितुटिः परिगीयते | २०६ |
| अतएव हि मन्यन्ते संप्रदायधना: जनाः | २१७ |
| अतदात्मा पटो नेति पृथुबुध्नादिरूपताम् | ३० |
| अतस्त्रयोदशत्वं स्यादित्थं नैकादशात्मता | १२५ |
| अतः सकलसंज्ञस्य प्रमातृत्वं न विद्यते | १०६ |
| अतो भेदसमुल्लासकलां प्राथमिकीं बधाः | २१० |
| अत्रापि न वहन्त्येताः किं नु युक्तिविकल्पनाः | ५३ |
| अत्रापि वेद्यता नाम तादात्म्यं वेदकैः सह | १६५ |
| अथ तन्निजमाहात्म्यकल्पितांशांशिकाक्रमः | ८१ |
| अथ वेदकसंवित्तिबलाद् वेद्यत्वधर्मभाक् | २२ |
| अधिष्ठाय समापत्तिमध्यासीनस्य योगिनः | २४३ |
| अधुनाऽत्र समस्तस्य धरातत्त्वस्य दर्श्यते | १६७ |
| अध्यारोपात्मकः सोऽपि प्रतिसंधानजीवितः | ५१ |
| अनन्तभेदतैकैकं स्थिता सकलवत् किल | १२४ |
| अनवस्था तथा ह्यन्यैर्नीलाद्यैः सदृशी न सा | ७१ |
| अनुत्तरादिह प्रोक्तं महाप्रचयसंज्ञितम् | २८१ |
| अन्यं प्रति चकास्तीति वच एव न विद्यते | ६३ |
| अन्यथा न प्रकाशेरन्नभेदे चेदृशो विधिः | ५५ |
| अन्यशक्तितिरोभावे कस्याश्चित्सुस्फुटोदये | १६२ |
| अन्यस्तथा न संवित्ते कमत्रोपलभामहे | १४८ |

| | |
|---|---|
| अन्यादृशेन वेत्येवं भावो भाति यथा तथा | ८४ |
| अन्याधीनप्रकाशं हि तद्भात्यन्यस्त्वसौ शिवः | ११६ |
| अन्ये तु कथयन्त्येषां भङ्गीमन्यादृशीं श्रिताः | २८८ |
| अपरं परापरं च द्विधा तत्सा परा त्वियम् | २७३ |
| अपि चास्त्येव नन्वस्तु न तु सत्प्रतिभासते | ९५ |
| अपूर्वमत्र विदितं नरीनृत्यामहे ततः | ३४ |
| अप्रकाशं तदन्येन तत्प्रकाशेऽप्ययं विधिः | ५२ |
| अप्रकाशात्प्रकाशत्वे ह्यनवस्था दुरुत्तरा | ११५ |
| अप्रकाशा स्वप्रकाशाद्धर्मादिति प्रकाशताम् | ७६ |
| अभिन्नेऽपि शिवेऽन्तस्थसूक्ष्मबोधानुसारतः | १८६ |
| अर्थक्रियाकरं तच्चेन्न धर्मः को न्वसौ भवेत् | ६१ |
| अर्थप्रकाशश्चेद्रूपमर्थो वा ज्ञानमेव वा | ३५ |
| अर्थे ज्ञाता यदा यो यस्तद्वेद्यं वपुरुच्यताम् | ६८ |
| अर्थे प्रकाशना सेयमुपचारस्ततो भवेत् | ४५ |
| अवतारो हि विज्ञानियोगिभावेऽस्य भिद्यते | १३९ |
| अवेद्यधर्मका भावाः कथं वेद्यत्वमाप्नुयुः | ३१ |
| अवेद्यमेव भानं हि तथा कमनुयुञ्जमहे | ९७ |
| अवेद्या एव ते संस्युर्ज्ञाने सत्यपि वर्णिते | २९ |
| अवेद्यो वेद्यतारूपाद्धर्माद्वेद्यत्वमागतः | ७५ |
| अव्यक्तान्ता यतोऽस्त्येषां सकलं प्रति वेद्यता | ९८ |
| अस्ति चातिशयः कश्चित्तासामप्युत्तरोत्तरम् | १९६ |
| आत्मसंकल्पनिर्माणं स्वप्नो जाग्रद्विपर्ययः | २९० |
| आद्यायां तु तुटौ सर्वं सर्वतः पूर्णमेकताम् | २०९ |
| आद्येऽत्रषट्के ता देव्यः स्वातन्त्र्योल्लासमात्रतः | १९५ |
| आविश्येव निमज्ज्येव विकास्येव विघूर्ण्य च | १६१ |
| आशिवात्सकलान्तं ये मातरः सप्त ते द्विधा | १८ |
| इति पञ्चपदान्याहुरेकस्मिन् वेदके सति | २२९ |
| इति श्रीसुमतिप्रज्ञाचन्द्रिकाशान्ततामसः | २८७ |
| इत्थं जडेन सम्बन्धे न मुख्याण्यर्थसंगतिः | ४४ |
| इत्यादि तुर्यातीतं तु सर्वगत्वात्पृथक्कुतः | २३९ |

| | |
|---|---|
| इत्येवं चोदयन्मन्ये व्रजेद् बधिरधुर्यताम् | ६९ |
| इत्येष दर्शितोऽस्माभिस्तत्त्वाध्वा विस्तरादथ (आह्निकान्त अर्द्धाली) | |
| इदं तु चिन्त्यं सकलपर्यन्तोक्तप्रमातृभिः | ७९ |
| उच्यते त्रिकशास्त्रैकरहस्यं तत्त्वभेदनम् | १ |
| उच्यते परिपूर्णं चेद् भावोयं रूपमुच्यते | ८० |
| उदासोनस्य तस्यापि वेद्यं येन चतुर्विधम् | २६३ |
| उदितं विपुलं शान्तं सुप्रसन्नमथापरम् | २६४ |
| उद्भूतपूर्णरूपोऽसौ माता मन्त्रमहेश्वरः | ११२ |
| उपचारः कथं नाम भवेत्सोऽपि ह्यवस्तु सन् | ४८ |
| उपचारे निमित्तेन केनापि किल भूयते | ४६ |
| उपदेश्योपदेष्टृत्वव्यवहारोन्यथा कथम् | ११८ |
| एकत्रापि प्रभौ पूर्णे चित्तुर्यातीतमुच्यते | २९९ |
| एतच्च सूचितं धात्रा श्रीपूर्वे यद् ब्रवीति हि | १८५ |
| एवं जलाद्यपि वदेद्भेदैर्भिन्नं महामतिः | १८३ |
| एवं द्वयंद्वयं यावन्यूनोभवति भेदगम् | २०५ |
| एवं द्वितीयषट्केऽपि किं तत्र ग्राह्यवर्त्मना | १९४ |
| एवं धरादिमूलान्तं प्रक्रिया प्राणगामिनो | १९९ |
| एतमेतद्धरादीनां तत्त्वानां यावतो दशा | १६४ |
| एवं लयाकलादोनां तत्संस्कारपदोदितात् | १५९ |
| कलान्तं भेदयुग्घोनं रुद्रवत्प्रलयाकलः | ४ |
| किं तत्प्रकाशतां नाम सुप्ते जगति सर्वतः | ३३ |
| केचित्त्वेकां तुटिं ग्राह्ये चैकामपि ग्रहोतरि | १९७ |
| कोऽपि भावः प्रोज्झतीति सत्यं तद् भावना फलेत् | १२१ |
| कौमारिलनैयायिकमतविमतिसतत्त्वविज्जयरथाख्यः (आह्निकान्त जयरथ) | |
| क्रमिकेयं भवेत्संवित्सूतस्तत्र किलाङ्कुरः | २२१ |
| क्रमात्तु भेदन्यूनत्वे न्यूनता स्यात्तुटिष्वपि | २०० |
| गतागतं सुविक्षिप्तं संगतं सुसमाहितम् | २५३ |
| गिरौ येनैष संयोगनाशाद् भ्रंशं प्रपद्यते | ४७ |
| ग्राह्यग्राहकसंवित्तौ सम्बन्धे सावधानता | २०४ |
| घट एव स्वरूपेण भात इत्युपदिश्यते | ९४ |

| | |
|---|---|
| चतुर्दशविधस्यास्य सकलस्यास्ति भेदिता | १२९ |
| चैत्रमैत्रादिभूतानि तत्त्वानि च धरादितः | २३२ |
| चैत्रेण वेद्यं जानामि द्वाभ्यां बहुभिरप्यथ | ८३ |
| जडेऽपि चितिरस्त्येव भोत्स्यमाने तु का कथा | १३४ |
| जाग्रदादि चतुष्कं हि प्रत्येकमिह विद्यते | २३८ |
| ज्ञानशक्तिः स्वप्न उक्तः क्रियाशक्तिस्तु जागृतिः | ३०० |
| ज्ञानाकलस्य मानं तु गलद्विद्याकलावृति | १४ |
| ज्ञानाकलोऽपि मन्त्रेशमहेशत्वाय बुध्यते | १३८ |
| तं प्रत्येव स वेद्यः स्यात्संकल्पद्वारकोऽन्ततः | ६६ |
| तत एव घटेऽप्येषा प्राणवृत्तिर्यदि स्फुरेत् | २२३ |
| तत एवोच्यते मल्लनटप्रेक्षोपदेशने | ८६ |
| ततो न किंचिद् वेद्यं स्यान्मूच्छित तु जगद्भवेद् | २४ |
| तत्र चैत्रे भासमाने यो देहांशः स कथ्यते | २३६ |
| तत्समावेशनैकत्स्यात् त्रयं तत्तदनुग्रहात् | २७१ |
| तत्र स्वरूपं शक्तिश्च सकलश्चेति तत्त्रयम् | ३०२ |
| तत्राक्षवृत्तिमाश्रित्य बाह्याकारग्रहो हि यः | २८९ |
| तत्तत्तत्त्वविभेदनसमुद्यतोद्योतिनिशितशूलकरः | जयरथ, मङ्गलश्लोक |
| तत्समावेशतादात्म्ये मातृत्वं भवति स्फुटम् | २७० |
| तत्समावेशनैकत्स्यात्त्रयं तत्तदनुग्रहात् | २७१ |
| तत्स्वप्नो मुख्यतो ज्ञेयं तच्च वैकल्पिके पथि | २४८ |
| तथा गतविकल्पेऽपि रूढाः संवेदने जनाः | २०२ |
| तथा चेदं दर्शयामः किं प्रकाशः प्रकाशते | ३७ |
| तथा चोक्तं कल्लटेन श्रीमता तुटिपाततः | २०८ |
| तथा तज्ज्ञातृवेद्यत्वं भावीयं रूपमुच्यताम् | ६७ |
| तथाहि वेद्यता नाम भावस्यैव निजं वपुः | १९ |
| तथाहि गन्तुं शक्तोऽपि चैत्रोऽन्यायत्ततां गतेः | ३९ |
| तथा षड्विधमध्वानमनेनाधिष्ठितं स्मरेत् | ९० |
| तथा हि भासते यत्तन्नीलमन्तः प्रवेदने | २३४ |
| तथाह्येकाग्रसकलसामाजिकजनः खलु | ८५ |
| तदनाभासयोगे तु स्वरूपमिति भण्यते | ९२ |

तदप्यविदितप्रायं गृहीतं मुग्धबुद्धिभिः ६४
तदस्यां सूक्ष्मसंवित्तौ कलनाय समुद्यताः १९८
तदीशवेद्यत्वेनेत्थं ज्ञानं प्रकृतकार्यकृत् ९१
तद्बलाद् वेद्यतायोग्यभावेनैवात्र वेद्यता १४१
तद्वच्चकास्ति वेद्यत्वं तच्च भावांशपृष्ठगम् ५७
तन्निरासाय नैतस्यां भेद उक्तो विशेषणम् २८२
तन्निर्विकल्पं प्रोद्गच्छद्विकल्पाच्छादनात्मकम् १९१
तर्हि लोके कथं ण्यर्थः उच्यते चेतनास्थितौ ३८
तव नीलः किंनु पीतो मैवं भून्न तु नीलकः ६५
तस्यामेकः प्रमाता चेदवश्यं जाग्रतादिकम् २३०
तस्याः स्वकं यद्वैचित्र्यं तदवस्थापदाभिधम् २२८
तादृगेव शिशुः किं हि दहत्यग्न्युपचारतः ४९
तादृशा स्वयमप्येष भाति ज्ञानं तु नो यथा ५४
तां च चिद्रूपतोन्मेषं बाह्यत्वं तन्निमेषताम् २१९
ता एव मातृमानमेयत्रैरूप्येण व्यवस्थिताः ८
तावत्तत्त्वोपभोगेन ये कल्पान्ते लयं गताः १७२
तावन्मात्रार्थसंवित्तितुष्टा प्रत्येकशो यदि ८७
तासु संदधतश्चित्तमवधानैकधर्मकम् २१२
तिरोभावोद्भवौ शक्तेः स्वशक्त्यन्तरतोऽन्यत १६३
तुर्यातीतपदे संस्युरिति पञ्चदशात्मके २९४
तेन प्रधाने वेद्येऽपि पुमानुद्भूतकञ्चुकः १०१
तेन मूढैर्यदुच्यते प्रबुद्धस्यान्तरान्तरा १७६
तेऽपि मन्त्रा यदा मेयास्तदा माता तदीश्वरः १११
तेषाममीषां तत्त्वानां स्ववर्गेष्वनुगामिनाम् २
त्रयस्यास्यानुसंधिस्तु यद्वशादुपजायते २९६
त्रितयानुग्रहात्सेयं तेनोक्ता त्रिकशासने २७७
त्रिधा मात्रावसानाः स्युरुदासीना इव स्थिताः १८०
त्रिवेदतामन्त्रमहानाथे कात्र विवादिता १२३
दशा तस्यां समापत्तौ रूपातीतं तु योगिनः २७४
दूरेऽपि ह्यन्तिकीभूते भानं स्यात्त्वत्र तत्कथम् २२०

द्वितीयं मध्यमं षट्कं परापरपदात्मकम् १९२
द्वितीया शिव (शक्ति) रूपैव सर्वज्ञानक्रियात्मिका २०७
द्वितीयो ग्राहकोल्लासरूपः प्रतिविभाव्यते १८९
द्विविधश्च प्रबोधोऽस्य मन्त्रत्वाय भवाय च १३५
धर्मी वेद्यत्वमभ्येति स सत्तासमवायवत् ७२
धरातत्त्वगताः सिद्धीर्वितरीतुं समुद्यतान् १६९
धरातत्त्वादिभेदेन यः प्रकाशः प्रकाशते १६८
न चेन्न क्वापि मुख्यत्वं नोपचारोऽपि तत्क्वचित् ३०१
न तु क्रमिकता काचिच्छिवात्मत्वे कदाचन २२४
ननु पाशवसांख्योयवैष्णवादिद्वितादृशा १७१
ननु चैत्रीयविज्ञानमात्रमत्र प्रकाशते २०
न भावग्रहणं तेन सुष्ठु सुप्तत्वमुच्यते २५९
न ह्येक एव भवति भेदः क्वचन कश्चन २८३
नात्र योगस्य सद्भावो भावनादेरभावतः २७९
नान्या काचिदपेक्षास्य कृतकृत्यस्य सर्वतः ७७
निष्प्रपञ्चः निराभासः शुद्धः स्वात्मन्यवस्थितः २८६
नीतो मन्त्रमहेशादिकक्ष्यां समधिशायते ११९
नीलादिवत्तथैवायं वेद्यता धर्म उच्यते ७८
न्यक्कृतां शक्तिमास्थायाप्युदासोनतया स्थितिम् १६०
न्यग्भूतकञ्चुको माता युक्तस्तत्र लयाकलः १०७
पदं च तत्समापत्ति पदस्थं योगिनो विदुः २५५
पाञ्चदश्यं धराद्यन्तर्निविष्टे सकलेऽपि च १०२
पार्थिवत्वेऽपि नो साम्यं रुद्रवैष्णवलोकयोः १५२
पूर्णतागमनौन्मुख्यमौदासीन्यात्परिच्युतिः २६५
पूर्णस्य वेद्यता युक्ता परस्परविरोधतः १२०
प्रकाशत्वोपचारे तु किं बीजं यत्र सत्यता ५०
प्रकाशात्म न तत्संविच्चाप्रकाशा तदाश्रयः ३२
प्रबुद्धं सुप्रबुद्धं च चतुर्विधमिदं स्मृतम् २४०
प्रबुद्धः सुप्रबुद्धश्च प्रमामात्रेति च क्रमः २३७
प्रबुभुत्सुः शुद्धविद्या मन्त्राणां करणं भवेत् १५

प्रमाता स्वकतादात्म्यभासिताखिलवेद्यकः ११३
प्रमातृता स्वतन्त्रत्वरूपा सेयं प्रकाशते २६९
प्रमातृमेयतन्मानप्रमारूपं चतुष्टयम् २३३
प्रमात्रन्तरसाधारभावहान्यस्थिरात्मते २५२
प्रयत्नवानिवाभाति तथा किं सुखवेदने २१८
प्रविभाव्यो न हि पृथगुपान्त्यो ग्राहकः क्षणः १९०
प्रसंख्याता प्रचयतस्तेनेयं प्रचयो मता २७५
प्रसंख्यानवतः कापि वेद्यसंकोचनात्र यत् २६२
प्रसंख्यानैकरूढानां ज्ञानिनां तु तदुच्यते २४४
प्रसीदतीव मग्नेव निर्वातीवेतिवादिनि १४९
प्रेर्यप्रेरकयोरेवं मौलिकी व्यर्थ संगतिः ४१
बाह्याभिमतभावानां स्वापो ह्यग्रहणं मतम् २५४
बीजभावोऽथाग्रहणं साम्यं तूष्णीं स्वभावता २६०
बीजं विश्वस्य तत्तूष्णीभूतं सौषुप्तमुच्यते २५८
बुद्ध्वा नादत्त एवाशु परोप्साविवशोऽपि सन् ५९
भावस्य रूपमित्युक्ते केयमस्थानवैधुरी ७०
भावस्य वेद्यता सैव संविदो यः समुद्भवः २७
भावस्यार्थप्रकाशात्म यथा ज्ञानमिदं त्वसत् २५
भूततत्त्वाभिधानानां योंऽशोऽधिष्ठेय उच्यते २४१
भेदवन्तः स्वतोऽभिन्नाश्चिकीर्ष्यन्ते जडाजडाः २९२
भेदोपभेदगणनां कुर्वतो नावधिः क्वचित् १५१
भेदो मन्त्रमहेशान्तेष्वेष पञ्चदशात्मकः १८४
भेदोऽयं पाञ्चदश्यादिर्यथा श्रीशंभुरादिशत् १८७
भैरवायत एव द्राक् चिच्चक्रेश्वरतां गतः २२६
भोक्तैव भण्यते सोऽपि मनुते भोक्तृतां पुरा १४६
मन्त्रास्तदीशाः पाञ्चध्ये मन्त्रेशपतयस्त्रिधा ५
मन्त्रास्तत्पतयः सेशाः रूपस्थमिति कोर्त्यते २८५
मन्वाते नेह वै किञ्चित्तदपेक्षा त्वसौ कथम् १३३
ममेति संविदि परं शुद्धं वस्तु प्रकाशते ९६
मया प्रकटितः श्रीमच्छाम्भवाज्ञानुवर्त्तिना २२७

